श्रीशुक उवाच ॥

इत्यादिश्याऽमरगणान् प्रजापतिपतिर्विभुः ॥
आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥२६॥

इत्यादिश्येति ॥ अनेकविधा देवाः । ते च स्वस्वमुख्याज्ञाकारिणः । अत एव सर्वानेव गणपतीनाज्ञापितवानित्याह ॥ अमरगणानिति ॥ तर्हि ब्रह्मणः कथं नावतार इत्याशङ्क्याह ॥ प्रजापतिपतिरिति ॥ प्रजापतीनां स नियन्ता ॥ अन्यथा सृष्टिर्न स्यादित्यर्थः । ननु साक्षाद्भगवता नोक्तमिति देवा न करिष्यन्तीत्याशङ्क्याह ॥ विभुरिति ॥ ब्रह्मा स्वत एव समर्थो देवानाज्ञापयितुम् । अनेनैव वृत्तान्तेन भूमिः कृतार्था जाता । तथापि गीर्भिरपि महीमाश्वास्य स्वधाम सत्यलोकाख्यं ययौ । गीर्भिरिति भूमेः प्रशंसावाक्यानि बहून्युक्तानीति ज्ञायते । भूमौ भगवदागमनं पूर्वं न सम्भावितमधुना जातमिति तद्भाग्याभिनन्दनं युक्तमिति ॥ २६ ॥

एवं भूमेः सान्त्वनमुक्त्वा देवक्याः सान्त्वनं वक्तुं तस्याः प्रथमं दुःखप्रापणोपायमाह—

शूरसेनो यदुपतिर्मथुरामावसन् पुरीम् ॥
माथुरान् शूरसेनांश्च विषयान् बुभुजे पुरा ॥२७॥

शूरसेन इति दशभिः ॥ सहस्राार्ज्जुनस्य पुत्राणां मध्ये ये पञ्चावशिष्टास्तेषां द्वितीयः शूरसेनः । यादवानां राज्यं ययातिना निवारितम् । ततः पुष्ट्यैव राज्यम् । यो महान् भगवदंशो भवति स राजेति ॥ तत्र सहस्रार्ज्जुनो भगवदंशः पुष्ट्या राजा बभूव । स जीवन्नेव शूरसेनाय मण्डलद्वयं दत्तवान् मथुरा-

शूरसेनात्मकम् । ज्येष्ठस्तु माहिष्मत्यामेव ॥ सर्वोत्कर्षे तु यद् दुःखं तद् दुःखं स्वल्पके स्मृतम् ॥ देशतः कालतश्चैवावस्थातश्च स्वतोऽन्यतः ॥ द्रव्यतो मानतश्चेति सप्तैव सुखदाः स्मृताः ॥ तथाभूताच्छब्दवशात् प्राप्ता दुःखं तदा पतिः ॥ प्रतिक्रियां समारेभे नवभिश्च प्रतिक्रिया ॥ तत्र प्रथमं देशस्योत्कर्ष उच्यते । पूर्वं शूरसेनः शत्रुघ्ननिर्मितायां मथुरायां तत्रत्यमानन्दमनुभूय निवासं कृतवान् । स च यदुपतिः यदूनां प्रभुः । तन्नाम्ना जातानपि शूरसेनान् विसृज्य मथुरामेवावसन् उभयान् देशान् बुभुजे । अनेन यदूनां मथुरा स्वदेश इत्युक्तम् ॥ २७ ॥

कालभेदेनापि सा महती जातेत्याह—

---

ननु मातृचरणानां दुःखप्रापणोपायमात्रं ह्यत्र वाच्यम् । तत्तु विवाहं कृत्वा गृहगमनसमये तथाऽऽकाशवाण्यभूदित्येतावतैव उक्तं भवतीति देशकालावस्थादिभिः सर्वोत्कर्षवर्णनं व्यर्थमित्याशङ्क्य तत्तात्पर्यमाहुः ॥ सर्वोत्कर्षे त्वित्यनेन ॥ भगवदाविर्भावस्थानमिति ॥ यथा वसुदेवजन्मसमय आनकदुन्दुभयो नेदुरिति सर्वत उत्कर्षो लोके ज्ञातस्तथा स्त्रिया भर्तृगृह एव पुत्रजन्म भवति । तत्र विवाहो निमित्तमिति तं कृत्वा तद्गृहगमनसमये मातुः सर्वोत्कर्षे भगवता सम्पादिते सति यत् दुःखमुपस्थितं तत् स्वल्पके निमित्ते शीघ्रमनायासेन भगवता निरासितुं योग्ये सति भवतीति भगवन्मार्गे शास्त्रे निरूपितमित्यत्रापि न काचिच्चिन्तेति ज्ञापनाय तद्वर्णनमित्यर्थः ॥ सुष्ठु अल्पकमतिसूक्ष्मं दुर्ज्ञेयमिति यावत् । तादृशे निमित्ते सतीत्यर्थः । भक्तदुःखं विना भगवदाविर्भावो न भवतीति तदर्थं तत्कथनमित्यपि तात्पर्यं ज्ञेयम् ॥ देशतः कालत इत्यादि ॥ सप्तैव सुखदा इत्युक्त एकस्य द्वयोर्वापि सुखदत्वं सम्भवतीति नायं नियम इत्याशङ्क्य निमित्तानां तावद्रूपत्वात्तथेति बोधयितुं तान्येवोक्तानि, देशत इत्यादिना ॥ अथवा, सार्वविभक्तिकस्तसिलिति केचिदिति वाक्यादत्र प्रथमातस्तसिलिति ज्ञेयम् ॥

राजधानी ततः साभूत् सर्वयादवभूभुजाम् ।
मथुरा भगवान् यत्र नित्यं सन्निहितो हरिः ॥ २८॥

राजधानीति ॥ ततः प्रभृति यावन्तो राजानः कंसपर्यन्तं स्वबलाज्जाताः । खण्डमण्डलाधिपतयस्तेषां तत्राऽत्यन्तं सुखानुभवाद् मथुरैव राजधानी अभूत् । सर्वे च ते यादवभूभुजश्च ॥ ततः शूरसेनप्रभृति ॥ राजा धीयते प्रीयते यस्यामिति सा राजधानी । निधीयते पट्टाभिषिक्तः क्रियत इति वा ॥ अनेन तत्र राज्यलक्ष्म्या नित्यं स्थानमित्युक्तम् । तत्र स्थितानामानन्दे हेतुः— भगवान् यत्र नित्यं संनिहित इति ॥ सर्वतत्त्वेषु यो विष्टः स भूमावपि सङ्गतः * स नित्यं क्वचिदेवास्ति तत्स्थानं मथुरा स्मृता ॥ तत्र स्थित्वा द्वयं चक्रे सर्वेषां सकलं हितम् * सर्वदुःखनिवृत्तिं च तत्र चेद् दुःखसम्भवः ॥ प्रतीकाराः सर्व एव मर्यादामार्गसम्भवाः * व्यर्था जाताः सर्वथेति ज्ञापनार्थं निरूपितम् ॥ श्रीरङ्गादिष्वपि नारायणस्य ब्रह्माण्डविग्रहस्य सान्निध्यम् ॥ देशकालादिमध्यस्थः षडङ्गत्वं य आगतः * सोऽन्यत्र सर्वदेशेषु शालग्रामादिषु स्थितः ॥ २८ ॥

तस्या अवस्थोत्कर्षमाह—

तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ॥
देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥

तस्यामिति ॥ तुशब्दो दुःखपर्यवसानेन भगवत्कृतसुखव्यावृत्त्यर्थः । सर्वानंशान् सर्वतो भगवान् स्वाऽवतारार्थ-

---

सर्वानित्याद्याचकर्षेत्यन्तम् । पूर्वसान्निध्ये सति भक्तदुःखाभावे स्वावतारो न सम्भवतीति तदर्थं तत्सान्निध्यं दूरीकृतवान् । अग्रे च तत्प्रयोजनाभावात् स्वस्मिन्नेव लीनं कृतवानित्यर्थः ॥

माचकर्षेति ज्ञापनार्थं वा तुशब्दः ॥ कर्हिचित् कस्मिंश्चित्काले, पूर्वोक्ते वा ॥ सुमुहूर्त्तादिकं न भवतीति कर्हिचिदित्युक्तम् । शौरिर्वसुदेवः । शूरस्य पुत्रः । अन्येऽपि वसुदेवाः सन्तीति पितृनाम्ना तन्निवृत्तिः । वसुदेवभ्रातरोऽपि बहव इति, वसुदेवपदम् ॥ कृत उद्वह उद्वाहो येन । देवक्या सूर्यया नवोढया सार्द्धं स्वगृहप्रयाणार्थं श्वशुरदत्तं रथमारुहत् । विवोहात्सवसमयो भर्त्तृसान्निध्यं चोत्तमाऽवस्था स्त्रियाः ॥ देवक्या सूर्ययेति स्वत उत्कर्ष उक्तः । भर्तृप्राधान्यमपि पतिव्रताया उत्कर्षहेतुः ॥२९॥

यद्यपि देवको ज्येष्ठस्तथापि मर्यादाराज्यं न भवतीति उग्रसेन एव राजा कंसो वा । मुख्य एव व्यवहारे सम्बन्धहेतुर्लोकप्रसिद्धः । अत उग्रसेनपुत्रोऽपि कंसो देवकपुत्र्या देवक्या भ्रातृकार्यं कृतवानित्याह—

उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ॥
रश्मीन् हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ ३० ॥

उग्रसेनसुत इति ॥ स्वसुर्भगिन्या देवक्याः संमाननरूपप्रियचिकीर्षया स्वयं हयानां रश्मीन् प्रग्रहान् जगृहे । सूतो जात इत्यर्थः । केवलेन प्रतिष्ठा न भवतीति विशेषणम् ॥ रौक्मैः सुवर्णपरिकरैः, रथशतैरनेकशतरथैर्वृतो वेष्टितः । अनेन वसुदेव एव मुख्यो राजा कृतः । स्वयमपि दासभावं प्राप्त इति महत् संमाननम् । अन्यत उत्कर्ष उक्तः ॥ ३० ॥

पितृकृतं द्रव्यकृतमुत्कर्षमाह—

चतुःशतं पारिबर्हं गजानां हेममालिनाम् ॥
अश्वानामयुतं सार्द्धं रथानां च त्रिषट्शतम् ॥३१॥

चतुःशतमिति ॥ क्षत्रिया हि चतुरङ्गिणीं सेनां विवाहे

पारिबर्हं प्रयच्छन्ति वधूवरयोः सन्तोषार्थम् । तत्र पदातीनां स्थाने कन्याप्रीत्यर्थं दास्यो दत्ताः । हेम्नो माला येषां गजानामश्वानां पञ्चदशसहस्राणि ॥ त्रिषट्शतमष्टादशशतम् ॥ ३१ ॥

दासीनां सुकुमारीणां द्वे शते समलङ्कृते ॥
दुहित्रे देवकः प्रादाद् यानैर्दुहितृवत्सलः ॥ ३२ ॥

दासीनां सखित्वज्ञापनाय सुकुमारत्वमलङ्करणं चोक्तम् । दास्यः कन्यायै केवलं दत्ताः, न तद्भर्त्रे । अतो न यथेष्टं तेन विनियोगः कर्त्तुं शक्यः । ननु देवक्या एव विवाहे कथमेतावद् दत्तवानित्याशङ्क्याह ॥ देवक इति ॥ अत्यन्तमयं देवो, भगवानत्रावतरिष्यतीति ज्ञानयुक्तः । ता अपि दास्यो यानैर्दोलाभिः सहिताः । तासां तथा करणे हेतुः ॥ दुहितृवत्सल इति ॥ स हि दुहितृषु वात्सल्ययुक्तः । तासामपि कन्यात्वाद्देवकीवाक्याद्वा तथाकृतवानित्यर्थः ॥ ३२ ॥

सम्माननामाह—

शङ्खतूर्यमृदङ्गानि नेदुर्दुन्दुभयः समम् ॥
प्रयाणप्रक्रमे तावद्वरवध्वोः सुमङ्गलम् ॥ ३३ ॥

शङ्खेति ॥ शङ्खो हि मुखवाद्यम् । तूरी हस्तवाद्यम् । मृदङ्गानि च । दुन्दुभयो दण्डवाद्यम् । सममेकदा । नैमित्तिकं तदित्याह ॥ प्रयाणप्रक्रम इति ॥ वरध्वोः सुमङ्गलं यथा भवति तथा नेदुः । अनेन शकुनमप्युक्तम् । पर्यवसानस्योत्तमत्वात् ॥ ३३ ॥

कालो ह्यत्र प्रतिबन्धको जात इति वक्तुं तस्याधिभौतिकः कालनेमिः कंसे निविष्टः शेत इति तत्प्रादुर्भावार्थं तदनुगुणदेवतायास्तदुत्कर्षमसहमानाया अकस्माद् वाक्यं जातमित्याह—

पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवाक् ॥
अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध ॥ ३४ ॥

पथीति ॥ शोभातिशयो मध्ये मार्गे प्रादुर्भूत इति पथ्येव उक्तवती । न तु गृहे, नापि गमनानन्तरम् । अनेनाधिभौतिकः कालोऽस्मिन् मार्गे प्रतिबाधकः । स प्रतिविधेय इति ज्ञापितम् । सर्वप्रकारेण प्रग्रहिणम् आभाष्य, रे रे कंसेति सावधानपर्यन्तमुक्त्वा । अशरीरा वागाकाशवाणी शरीरात् ताल्वोष्ठपुटाघातेन न निर्गता । तस्या वाक्यमाह ॥ अस्या इति ॥ अष्टमो गर्भ इति संख्या निःसन्दिग्धा । कन्या पुत्रो वेति न विशेष उक्तः । मध्ये भगवता तथा प्रेरिता । स बालक एव त्वां हन्ता हनिष्यति ॥ दासीषु प्रेक्षिकासु वेति सन्देहव्युदासायाह ॥ यां नयस इति ॥ न चेयं मम भगिनी न तथा कर्त्तुं दास्यतीति वक्तव्यम्। यतस्त्वमबुधः । कस्याऽपि तत्त्वं न जानासीत्यर्थः । हे अबुधेति सम्बोधनं वक्तुर्हितत्वज्ञापनाय ॥ ३४ ॥

ततो यज्जातं तदाह—

इत्युक्तः सखलः पापो भोजानां कुलपांसनः ॥
भगिनीं हन्तुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥३५॥

इत्युक्त इति ॥ आकाशवाण्यास्त्वभिप्रायः । सा स्वगृहे एव स्थापनीया । अन्यदा वा किञ्चित् कर्त्तव्यमिति । कंसस्तु इत्युक्त एव सखलः कालनेमिसहितः स प्रसिद्धो दिग्विजयी

---

अनेनाधिभौतिकः काल इति ॥ भगवत्प्रादुर्भावहेतुर्भक्तिमार्गोऽयं विवाहश्चेत्युभयोः साम्यादेतत्सम्बन्धिमार्गे कालकृतप्रतिबन्धकथनेन भक्तिमार्गेऽपि तथात्वं ज्ञाप्यत इत्याशयेनेदमुक्तम् । एवं सत्यस्मिन् मार्गे भगवत्प्रापकमार्ग इत्यर्थो ज्ञेयः ॥

खलः प्रकृत्या भगिनीं हन्तुं खड्गपाणिर्भूत्वा कचे केशपाशे तामग्रहीत् । ननु महत् पापं कथं करिष्यतीत्याशङ्क्याह ॥ पाप इति ॥ निरन्तरपापकरणेन स पापात्मैव जातः । तस्मात्तस्य शास्त्रं न बाधकम् । खलत्वाल्लोकोऽपि न बाधकः । वंशजा अपि न तस्य बाधका जाता इत्याह ॥ भोजानां कुलपांसन इति ॥ भोजवंशोद्भवा ये तेषां कुले पांसनो मलरूपः, कलङ्करूप इति यावत् ॥ कलङ्कजननं तस्य स्वरूपम् । अतः कुले विचारेणापि न निवर्त्तत इति भावः । कचेषु किञ्चित् कर्त्तव्यं नास्तीति सप्तमी । स तु भगिनीमेव हन्तुं कालेन समारब्धः । आरब्धवान् वा । अपलायनार्थं तस्या ग्रहणम् ॥ ३५ ॥

वसुदेवस्तु शूरोऽसहायः कंसबलं च जानातीति, स्वतो दोषस्तस्य च न भवतीति निश्चित्य सान्त्वनार्थं प्रवृत्त इत्याह—

**तं जगुप्सितकर्माणं नृशंसं निरपत्रपम् ॥**
**वसुदेवो महाभाग उवाच परिसान्त्वयन् ॥३६॥**

तामिति ॥ नायं स्त्रीलोभेन तथा करोति । किन्तु अनुचितमिति दयाविष्टस्तं परिसान्त्वयन् उवाचेति सम्बन्धः । लोकलज्जया स्वयमेव न करिष्यतीति ज्ञात्वा कथं न तूष्णीं स्थितस्तत्राह ॥ जुगुप्सितमेव सर्वदा करोतीति तथा । स्वस्य दयया त्यक्ष्यतीत्यपि न । यतो नृशंसः क्रूरात्मा । दैत्येष्वपि हीनत्वादपत्रपामपि न । यतो निर्गता अपत्रपा यस्य । लज्जा साऽपत्रपान्यतः ॥ वसुदेव इति ॥ उपेक्षायामयुक्तः । सर्वप्रकारेण मोचयितुं शक्तः । किञ्च, महाभागः ॥ तस्य जन्मन्यानका

---

कचेषु किञ्चिदित्यादि ॥ ग्रहणक्रियाकर्मत्वेऽपि कचानां कर्तुर्ग्रहणक्रियेप्सिततमत्वाभावात्तथात्वज्ञापनाय सप्तम्युक्ता, न द्वितीयेत्यर्थः ॥

दुन्दुभयश्च नेदुः । अतो महाभाग्यवान् ॥ आकाशवाणीं च श्रुत्वा इयं न मरिष्यतीति निश्चित्य कथञ्चित् प्रतीकारः कर्तव्य इति युद्धादिकमकृत्वा कंसं परितः सान्त्वयन्, तिष्ठ तिष्ठ मद्विज्ञापनां शृण्विति वदन्नाकाशवाण्याः समाधानार्थं वक्ष्यमाणमुवाच॥३६॥

आकाशवाण्युक्तं न मिथ्या । अयं च प्रतिकारार्थं यतते । तत्र क्रियया प्रतीकारो न भवति, ज्ञानेनैव प्रतीकारो भवतीति नवभिः प्राणश्लोकैस्तस्य सर्वतत्त्वमुपदिशति—

वसुदेव उवाच ॥

श्लाघनीयगुणः शूरैर्भवान् भोजयशस्करः ॥
स कथं भगिनीं हन्यात् स्त्रियमुद्वाहपर्वणि ॥३७॥

श्लाघनीयेति ॥ यद्ययं मृत्यौ निरभिमानस्तिष्ठेद् अक्लिष्टकर्मा भगवान् तं न हन्यात् । अत इदम् उपदिश्यमानं देवगुह्यत्वात् प्रतिबन्धकत्वेन फलितम् । वसुदेवोऽपि भगवता प्रेरित इत्यनधिकारिणमनवसरे बोधयति । आकाशवाणीप्रामाण्येन हि स मारयितुमुद्यतः । सा चेन्मारिता स्याद् आकाशवाणी अप्रमाणैव स्यादतोऽन्य एवोपायश्चिन्तनीयस्तेनापि । अतोऽनवसरेऽपि दयया तद्धितमेवोक्तवान्नवधा । एतदकर्त्तव्यम् । महतो निन्दितकरणमनुचितम् । नायं च प्रतीकारः । नाऽपि प्रतीकारः कर्त्तव्यः । पूर्वदेहस्य मलत्वात् । नाऽपि देहान्तरं दुर्लभम् । नापि पूर्वदेहस्य त्यागे कश्चन प्रयासः । नापि वस्तुतो देहाध्यासव्यतिरेकेण देहिनः स्वतो जन्माऽस्ति । देहाध्यासश्चाज्ञानादिति ज्ञानेन निवर्त्तते । किञ्च, यावदन्यस्मै न द्रुह्यति तावन्न तस्य भयं भवति । द्रोहे मया वा मन्निष्ठेन वा भगवता तव हननं निश्चितम् । आकाशवाण्या मिथ्यात्वात् । लोकस्वभावविरुद्धश्चायमिति । तत्राद्यमन्त्यौ च लौकिकौ, मध्ये षट्पारमार्थिकाः । तत्र प्रथमं तव

विगर्हितमनुचितमित्याह ॥ शूरैर्जरासन्धादिभिः श्लाघनीया गुणा यस्य । शूरा हि युद्धमभिमन्यन्ते,कातरा एव मृत्युं विचारयन्ति । अतोऽस्याः पुत्रो मारयिष्यतीति श्रवणाच्छूराणाम् उत्साह एव युक्तः । न तु स्वशौर्यनाशकं तन्मारणमुचितम् । द्वौ सम्मताविह मृत्यू दुरापाविति वाक्यात् । भवांश्च क्षत्रियधर्मे निष्णात इति सर्वैः श्लाघ्यते । किञ्च, भोजयशस्करो भवान् । भोजवंशे नैतादृशः शूर इति । अतः स्वकर्मकीर्तिजनकत्वादाकाशवाणीवाक्यश्रवणेन वधो नोचितः । किञ्च एतादृशयशोधर्मयुक्तो दयापात्रं भगिनीं कथं हन्याद्, यदर्थं लोकाः स्वयं म्रियन्ते । किञ्च, स्त्रीवधोऽनुचितः शूराणाम् । भगिन्यपि कदाचित् क्षत्रियवंशोद्भवत्वाच्छौर्यमवलम्बते । तादृश्यपीयं न भवति । सा तु पुंप्रकृतिका भवति, इयं तु स्त्र्येवेति न पुनरुक्तिः । किञ्च वधे कर्त्तव्येऽपि कालान्तरे कर्त्तव्यं, न तु विवाहोत्सवे । लौकिका राजानो मारणीयं विषादिनापि मारयन्ति । तस्माच्छौर्यादिधर्मवतस्ते नेदमुचितम् ॥ ३७ ॥

किञ्च, यदियं हन्यते तन्मृत्युप्रतीकारार्थं, न तु वैरभावेन। न च मृत्युरस्यां हतायां प्रतिकृतो भवति । सहजत्वादित्याह—

मृत्युर्जन्मवतां वीर देहेन सह जायते ॥
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८ ॥

मृत्युरिति ॥ नापि विलम्बार्थम् । वाणीवचनादेव । नेयं हन्ति नापि हनिष्यति । अस्या अष्टमो गर्भः शीघ्रमेव हनिष्यतीति वाक्यमस्ति । अथ कदाचिद्धनिष्यतीति शङ्का । तान्नित्यमृत्योरनेनान्येन वा हननं सिद्धमिति नाऽयं प्रतीकारः । तदाह ॥ जन्मवतामुत्पन्नानां मृत्युर्देहेन सह जायते । मृत्युनैवेदमावृतमासीदित्युपाख्याने, भगवान् मृत्योः सकाशात् प्राणिनो

बहिः कृत्वा तेषामन्तर्मृत्युं पातितवान् । अशनाया मृत्युरेवेति श्रुतेः । अशनायारूपो मृत्युर्देहेन सहैव जायते । तस्मात् प्रत्यहमनुभूयमानो मृत्युर्नित्य इति । अद्य वा, अब्दशतान्ते वा प्राणिनां मृत्युः सिद्ध एव । वीरेति सम्बोधनम्, एवं कथनेऽपि भयाभावाय। अब्दशतान्ते मृत्युः सर्वेषामभिमत इति तदैव वा आकाशवाणी सत्या भविष्यतीति नमारणमुचितमितिभावः॥३८॥

नच देहत्यागे क्लेशो भविष्यतीति क्लेशनिवृत्त्यर्थमौषधपानवदस्या मारणमुचितमित्याह—

देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ॥
देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ३९ ॥

देह इति ॥ देहे पञ्चत्वमापन्ने पञ्चमहाभूतेष्वंशतो लीने सति अयं देहाभिमानी जीवो देहान्तरं नवीनं कल्याणतरं प्राप्य प्राक्तनं मलप्रायं वपुस्त्यजते । ग्रहणे त्यागे वा नास्य प्रयासोऽस्ति । यतः कर्मानुगः । कर्मणैव तथोपस्थाप्यते । नाप्यस्य प्रयत्नापेक्षा । यतोऽवशः ॥ अनुप्राप्येति कालविलम्बो निराकृतः । अतः प्रयासाभावादौषधवदप्यस्या मारणमयुक्तम्॥३९॥

किञ्च देहान्तरप्राप्तौ विलम्बो भविष्यतीत्यपि न शङ्कनीयमित्याह—

व्रजँस्तिष्ठन् पदैकेन यथैवैकेन गच्छति ॥
यथा तृणजलौकैवं देही कर्मगतिं गतः ॥ ४० ॥

व्रजन्निति ॥ यथा गच्छन् पुरुष एकेन पदा तिष्ठन्नेकेन गच्छति प्रथमतः स्थितिः पश्चाद्गतिस्तथा प्रथमतो देहान्तरग्रहणं पश्चादस्य परित्यागः। गमने देशभेदस्य दुर्ज्ञेयत्वाद् दृष्टान्तान्तरमाह ॥ यथा तृणजलौकेति ॥ तृणान्तरे स्थित्वा पूर्वतृणं त्यजतीति प्रत्यक्षसिद्धम् । यथाऽत्र बुद्धिप्रयत्नौ तथा देहान्तरे कर्म-

गतयः । तदाह ॥ कर्मगतिं गत इति ॥ कर्मगतिं देवतिर्यगादि-देहम् ॥ ४० ॥

नन्वधिकप्रयासाभावेऽपि दृष्टान्तानुरोधेनाल्पः प्रयासो भविष्यति । सोऽपि शीघ्रं मा भवत्विति मारणमितिचेत्, तत्राह—

स्वप्ने यथा पश्यति देहमीदृशं
मनोरथेनाभिनिविष्टचेतनः ॥
दृष्टश्रुताभ्यां मनसानुचिन्तयन्
प्रपद्यते तत् किमपि ह्यपस्मृतिः ॥ ४१ ॥

स्वप्ने यथेति ॥ न हि स्वप्ने देहग्रहणे परित्यागे वाऽणु-मात्रमपि प्रयास उपलभ्यते । वैलक्षण्यमपि कदाचिदेव प्रतीयते, न सर्वदेत्याह ॥ ईदृशमिति ॥ ननु स्वप्नदेहः कर्मसाध्यो न भवतीति न प्रयास इतिचेत्तत्राह ॥ मनोरथेनाभिनिविष्टचेतन इति ॥ मनोरथेन तत्तद्वस्तुभावनया मनोगत्या कर्मणा तादृशे देहे तदुपभोग्ये विषये वा अभिनिविष्टा चेतना बुद्धिर्यस्य । मनो-रथेनापि स्वप्नो दृश्यते। ज्ञानकर्मणी च सम्भवतः । यथा लोका-ऽन्तरगतौ । तं विद्याकर्मणी समारभेते पूर्वप्रज्ञा चेति । ततः स्वप्नदेहलोकान्तरदेहयोस्तुल्यत्वान्न ग्रहणपरित्यागयोः प्रयासः। नच वक्तव्यं मनोरथस्य तत्र कारणता नास्तीति । यतो दृष्ट-श्रुताभ्यां प्रत्यक्षशास्त्राभ्यां प्रमाणाभ्यां मनसा राजादिदेह-मिन्द्रादिदेहं वाऽनुचिन्तयन् तदेव प्रतिपद्यते । स्वप्ने राजाह-मस्मीन्द्रोऽहमस्मीति । पूर्वदेहस्य तु स्मरणमपि नास्ति, कुत्र ग्रहणपरित्यागप्रयाससम्भावना । तदाह ॥ अपगता स्मृतिः पूर्व-देहस्मरणं यस्य । तत् पूर्वानुभूतमेव किमप्यनिर्वचनीयं स्वाप्निक-स्य मायिकत्वात् । तदुदितः स हि यो यदनन्तर इति न्यायेन स्वप्नो मनोरथहेतुक इति ॥ ४१ ॥

किञ्च, देहस्योत्पत्तिमरणे, न त्वात्मनः। आत्मा तु तदऽध्यासाज्जायते म्रियते वा, तदाह—

यतो यतो धावति दैवनोदितं
मनो विकारात्मकमाप पञ्चसु ॥
गुणेषु मायारचितेषु देह्यसौ
प्रपद्यमानः सह तेन जायते ॥ ४२ ॥

यतो यत इति ॥ अस्मिन्न सिद्धान्ते मन एव देहग्रहणपरित्यागयोर्हेतुः । तच्च मनोविकारात्मकम् । नानाविकाराः सङ्कल्पविकल्पात्मका आत्मा यस्य । तस्य प्रेरकं कालकर्मभगवदिच्छानामन्यतरद्दैवशब्दवाच्यम् । तेन दैवेन प्रेरितं मनो मायारचितेषु विषयेषु मोहेनोत्तमत्वं प्रापितेषु मध्ये यस्माद्यस्माद्यं यमर्थं विहाय यत्र यत्र लग्नं भवति तत्र तत्रैवाऽसौ देही तदेव प्रपद्यमानोऽहमिति मन्यमानः, तेन सह जायते । न तु स्वतः । मनश्च यदा यद्भावयिष्यति तादृशो देहो भविष्यति, यच्च त्यक्ष्यति तद्गमिष्यति । विषयास्तु समा एव । एवमपि सति यमेवार्थं मन उत्कृष्टत्वेन मन्यते तदस्मादुत्कृष्टमेव भवतीति नोत्कृष्टदेहरक्षाऽर्थमियं मारणीयेत्यर्थः ॥ ४२ ॥

एवं मनोऽनुसरणेन देहानुसरणमपि मोहादेव । प्रतिबिम्बन्यायेन, न त्वात्मनस्तथात्वमस्तीत्याह—

ज्योतिर्यथैवौदकपार्थिवेष्वदः
समीरवेगानुगतं विभाव्यते ॥
एवं स्वमायारचितेष्वसौ पुमान् ॥
गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥

ज्योतिरिति ॥ औदकपार्थिवेषु उदकयुक्तेषु पार्थिवेषु शरावादिषु तथोदकस्थानीयमन्तःकरणं, पार्थिवस्थानीयो देहः ।

औदकेषु उदकयुक्तेषु पार्थिवेषु काचादर्शादिषु वा समीरवेगा-श्चाञ्चल्यमालिन्यादयः । तैरनुगतं सूर्यादिज्योतिर्विभाव्यते । प्रतिबिम्बितस्यैव सूर्यादेस्तत्सम्बन्धो, नाकाशादिस्थितस्य । अद इति सम्बन्धाभावायाकाशादिस्थितः प्रदर्शितः । एवमेव स्वमोहेन रचितेषु सम्यक्कृतयाऽभिमतेषु देहेन्द्रियादिष्वसौ जीवः पुमान् भगवानेव रागेणानुगतः, तेन सहैकत्वं प्राप्तः प्रतिबिम्बन्यायेन प्रविष्टो विशेषेण मुह्यति ॥ तस्माद् देहसम्बन्धो भ्रमादिति, न तद्वशादात्मनोऽपकारः कर्त्तव्यः ॥ ४३ ॥

एवं तत्त्वं निरूप्य देहरागान्नात्मनोऽपकारः कर्त्तव्य इति यदुक्तं तल्लोकेऽपि तुल्यमिति वदन् मारणे भेदात्मकं भयं प्रदर्शयति—

**तस्मान्न कस्यचिद् द्रोहमाचरेत् स तथाविधः ॥**
**आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥४४॥**

तस्मादिति ॥ यस्माद्देहो नात्मा । तस्माद्देहार्थं कस्यचिदपि द्रोहं नाचरेत् ॥ यतः स तथाविधः । यादृशो हन्यते तादृशः । अनेन स्वसाम्येन दया निरूपिता । यथा स्वरक्षा विचार्यते तथा पररक्षापि विचारणीयेत्युपदेशफलम् । अविचारे बाधक-माह ॥ आत्मनः क्षेममन्विच्छन्निति ॥ यदि विचारयति तदात्मनो-ऽपि क्षेमो भवति । सोऽपि विचारयतीति । यदि न विचारय-ति तदा द्रोग्धुर्घातकस्य परतो मार्यान्मत्त एव तव भयं भविष्य-तीत्यर्थः ॥ ४४ ॥

लौकिकव्यवहारेणापि मारणं नोचितमित्याह—

**एषा तवानुजा बाला कृपणा पुत्रिकोपमा ॥**
**हन्तुं नार्हसि कल्याणीमिमां त्वं दीनवत्सलः ॥४५॥**

एषा तवानुजेति ॥ लोके कनिष्ठभगिनी स्नेहपात्रं भव-ति । तत्रापि बाला । अष्टवार्षिकी । लालनयोग्या । तत्रापीदानीं

दीना भयविह्वला चातुर्यानभिज्ञा च। पुत्रिकोपमा प्रतिमोपमा। तस्मादेषैव परं नेया, न तु मारणमुचितमित्याह॥ हन्तुं नार्हसीति॥ कल्याणीं विवाहालङ्कारयुक्ताम्॥ इमामिति प्रदर्शनेन दयामुत्पादयति। त्वं च, दीनवत्सलः। अनाविष्टस्वरूपस्य तथात्वात्। स हि तमनाविष्टमेव मन्यते॥ ४५॥

एवं शास्त्रार्थनिरूपणेन दयाभयादिजननेऽपि न मारणान्निवृत्त इत्याह—

**श्रीशुक उवाच॥**

**एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः॥**
**न न्यवर्तत कौरव्य पुरुषादाननुव्रतः॥ ४६॥**

एवमिति॥ भेदा आत्मानात्मविवेकपरमार्थलौकिकभयरूपाः। साम ज्ञानम्। साम्यं दया च। एवमनेकप्रकारेणापि बोध्यमानो दारुणो दैत्यात्मा न न्यवर्त्तत। तस्माद्वधान्निवृत्तो न जातः। तत्र हेतुः, पुरुषादान् राक्षसान् अनुव्रतोऽनुसृतः। पुरुषादाननुमारणलक्षणं व्रतं यस्येति वा। आविष्टो हि तथैव॥४६॥

एवं पूर्वप्रयासे उपदेशात्मके विफले जाते पुनर्भगवदिच्छया प्रकारान्तरेण समाधानार्थं यत्नं कृतवानित्याह—

**निर्बन्धं तस्य तं ज्ञात्वा विचिन्त्यानकदुन्दुभिः॥**
**प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत॥ ४७॥**

निर्बन्धमित्यष्टभिः॥ अयं लौकिको नालौकिकेन परमाऽर्थेन निवर्त्तते। अतोऽस्य लौकिक्येव युक्तिः कर्त्तव्या॥ तस्माद् युक्तेः स्फूर्त्तिः प्रथममुच्यते। सा च पुत्रदानात्मिका। तस्याश्चायुक्तत्वमाशङ्क्य युक्त्या युक्तत्वसमर्थनम्। ततः स्फुरितस्योपायस्यानुवादः सोपपत्तिकः। तस्यैव प्रतिकूलतर्कपराहत्या समर्थनम्। अशक्तावदृष्टशरणागतिः। तस्याप्युपायस्य ग्रहणार्थं

साधनानुष्ठानम् । तत उद्योगः कथनं चेति । अलौकिकस्फुरणा- त्तस्याङ्गीकारः । तेनायमुपाय आपाततः सफलः । पूर्वोपाय- वैयर्थ्यमनुवदति ॥ निर्बन्धं तस्येति ॥ तस्य कंसस्य वधरूपं तं निर्बन्धम् अवश्यक्रियासाधकयत्नं तच्चेष्टया ज्ञात्वा, अतः परं किं कर्त्तव्यमिति विचिन्त्य इदमग्रे वक्ष्यमाणमन्वपद्यतेति स- म्बन्धः । विरोधस्त्वनेनाशक्यो दृष्टप्रकारेणालौकिकप्रकारेण च। अन्ये तूपाया निवर्त्तिताः । अतः परं द्वयमवशिष्यते, इयं वा देया- ऽस्याः पुत्रा वा। एतस्या दाने एतां मारयिष्यत्येव। मत्सम्बन्धि- पुत्राणामाकाशवाण्यामश्रुतत्वात् । देवद्वाराऽपि तथात्वशङ्कया मारणमावश्यकम् । इदानीं स्वतो मारयति । पश्चान्मारणे तु ममापि दोषः स्यादिति । पुत्रदानं चायुक्तम् । यतः स पुत्रो भगवद्रूपो भविष्यतीत्यानकदुन्दुभिपदेन ज्ञापितम् । तस्य जन्म- न्यानका दुन्दुभयश्च नेदुरिति । तत्र भगवदुत्पत्तिरावश्यकी । साऽपि न भार्यान्तरे । आकाशवाणीप्रामाण्यात् । एवं सङ्कटे पतिते आनकदुन्दुभिः स्वस्मिन् भगवदुत्पत्तिं निश्चित्यास्यामेवे- त्यपि पुत्रदानमेव कर्त्तव्यत्वेन ज्ञातवान् । तदपि न सर्वथा । भगवद्वैमुख्यप्रसङ्गे सति भगवदवतार एव न स्यादिति । तदाह ॥ प्राप्तं कालं प्रतिव्योढुमिति ॥ इदानीं मृत्युः प्राप्तस्तस्याः, स दूरीकर्त्तव्यः । अयुक्तमप्युक्त्वेति, इदं पुत्रदानलक्षणं तत्र त- स्मिन् समयेऽन्वपद्यत अकस्माद् हृदये समागतमित्यर्थः ॥ ४७॥

ननु प्रक्षालनाद्धि पङ्कस्येत्यादिन्यायेनेदानीमेव कथं न तूष्णीं भावस्तत्राह—

मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ॥
यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥

मृत्युर्बुद्धिमताऽपोह्य इति ॥ अन्यथा भगवान् पश्चा-

दिभ्यो विशिष्टानस्मान् किमित्युत्पादितवान् । अतो बुद्धिमता मृत्युरपोह्यः स्वस्य परस्य वा । ननु कृत एवैकवारमुद्यम इति चेत्तत्राह ॥ यावद्बुद्धिबलोदयमिति ॥ बुद्धेर्बलस्य च याव- दभ्युदय उत्तरोद्गतिः, न तु समता ह्रासो वा । तावद्विवेकवता यत्नः कर्त्तव्यः । बुद्ध्या क्रियया वा । ननु यथा पूर्वमुद्यमो विफलो जातः, एवमग्रेऽपि चेद्भविष्यति तदा किमुद्यमेनेतिचे- त्तत्राह ॥ यद्यसौ मृत्युर्न निवर्त्तेत तदा उपेक्षालक्षणोऽपराधो देहाभिमानिनो नास्ति । देहाभिमानी कालादिदण्डमर्हति । अतो नापराधः कर्त्तव्यः ॥ ४८ ॥

शास्त्रं च यच्छक्नुयात्तत् कुर्यादिति, फलं तु दैवाधीनम् । अतोऽयमुपायः कर्त्तव्य इति निर्द्धारः । तमुपायमाह—

प्रत्यर्प्य मृत्यवे पुत्रान् मोचये कृपणामिमाम् ॥
सुता मे यदि जायेरन् मृत्युर्वा न म्रियेत चेत् ॥४९॥

प्रत्यर्प्येति ॥ मृत्युरयं कंसे निविष्टः प्रतीयते । तस्य हि सर्वे भक्ष्याः । अप्रतीकार्यश्च स तु पुत्रान् कदाचिद्भक्षयिष्यत्येव। स चेदिदानीं मह्यं दास्यत्येतां तदा पुत्रानपि स एव दत्तवान् । अतो दत्तस्य प्रतिदाने न कोऽपि दोषः । तथा करणे विशेषमाह मोचये कृपणामिमामिति ॥ इयमिदानीं मोचिता स्यात् । अधिको- ऽस्मिन् पक्षे लाभः । अरक्षायां तु नाऽपि पुत्रा, नापीयम् । नन्वेतदप्यनुचितम् । इयमेका, पुत्राश्च बहवः । ते च बालकाः स्वस्यान्तरङ्गाः । दोषाधिक्यं च । अर्पणं च न सम्भवति । इदानीं पुत्राणामभावाद्विद्यमानाविद्यमानयोः सिद्धवत्कारेण विषयवि- भागोऽप्यसङ्गतः । अतो धर्महानिप्रसङ्गाल्लोकापकीर्त्तेश्च नाय- मुपाय इति चेत्, तत्राह ॥ सुता मे यदि जायेरन्निति ॥ तेषां नरकत्राणाभावान्न पुत्रत्वम् । प्रसवाज्जायन्त इति सुतत्वमस्त्येव ।

पुत्रोत्पादनं तु स्वाधीनम् । तस्मादियं भिन्नतयैव स्थापनीया । तथा सति न कोऽपि दोषो भवेत् । प्राणरक्षाया ऋतुकालगमनापेक्षयाऽधिकफलत्वात् । नन्वेतदप्यशक्यम् । कामाचोदनयापि वेतिचेत् तर्ह्येकः पुत्रो भवतु । नैकः पुत्रः पुत्र इतिचेत्तर्हि द्वौ भविष्यतः । पुत्रपुत्रयोर्जातयोरगमनेऽपि न दोषः । एतावती लौकिक्युपपत्तिः । तथाऽलौकिकी । भगवदिच्छयाऽऽकाशवाणीप्रामाण्याच्च यदि मे बहव एव सुता जायेरन्, तेऽपि बहुकालेनोत्पादनीयाः । कालेऽपि भगवदिच्छा चेत्तदा पुत्रसंरक्षार्थं मृत्युरेव म्रियेत । प्राणिमात्रे शतं मृत्यवस्तत्र तत्र स्थाने निरन्तरमुत्पद्यन्ते । अत्रात्र वै मृत्युर्जायत इति श्रुतेः । तत्र तत्रैव प्रतीकारः कर्त्तव्यो यत्र यत्रैव मृत्युर्जायते । तत एवैनमवयजत इति श्रुतेः । तस्माद्य उत्पद्यते स म्रियत एव । अत इदानीमुत्पन्नो मृत्युः प्रतीकारे कृते म्रियते । अन्यस्यान्य उपायः कर्त्तव्यः । एको मृत्युरित्यपि पक्षस्तस्मिन्नपि पक्षे स नियतकालः । स चेदिदानीं निवृत्तः, पुनस्तस्य कालाभावात्तं प्रति म्रियेतैव । अतः शब्दनित्यत्ववदस्या मृत्युरेव गच्छेत् । नन्वेकमृत्युपक्षे मृत्योर्मरणं न श्रूयते । लोकाल्लोकादेव मृत्युमवयजते नैनं लोके लोके मृत्युर्विन्दतीति श्रुतेः । तत्राह ॥ मृत्युर्वा न म्रियेतचेदिति । तदा नियतत्वात् पुत्रान् समर्पयिष्ये । कंसो मृत्युरित्यपव्याख्यानम् । अत्रात्र वै मृत्युर्जायत इति श्रुतिविरोधात् । मृत्योरधिकरणमेव सः । लक्षणया तत्परः शब्द इतिचेद् मृत्युत्वादेव अमरणे सिद्धे व्यर्थोऽनुवादः प्रसज्ज्येत । अस्तु वा तथा । सोऽप्याकाशवाणीप्रामाण्यान्न मरिष्यत्येव । तथापि दास्यामीति सम्बन्धः ॥ ४९ ॥

ननु कथमेवमयुक्तं कर्त्तुं शक्यते ? तत्राह—

विपर्ययो वा किं न स्याद् गतिर्धातुर्दुरत्यया ॥
उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥ ५० ॥

विपर्ययो वा किं न स्यादिति ॥ वाणीप्रमाण्याच्चेत्तस्या मरणं, तदा तत एव विपर्यय एव किं न भवेत् । मत्पुत्रादेवास्य मरणमिति । नन्वेतद् युक्तिबाधितं, बालस्तव पुत्र इतिचेत्तत्राह ॥ गतिर्धातुर्दुरत्ययेति ॥ धातुर्भगवतो गतिरुत्पत्तिस्थितिप्रलयरूपा दुरत्यया दुःखेनाप्यतिक्रमितुं ज्ञातुमशक्यत्वात्। न हि लौकिकयुक्त्या भगवतो वध्यघातकभावो निर्णेतुं शक्यः । अलौकिकास्तु ये भावा न तांस्तर्केण योजयेदिति वाक्यात् । तस्मात् पुत्रदानकथनेन सांप्रतमियं संरक्ष्या, पश्चादेतत्पुत्रैरयं च वध्यः । तस्मादेतदेव कर्त्तुमुचितम् । तदाह ॥ उपस्थितोऽस्या मृत्युरेवं कृते निवर्त्तेत । एतन्मारणेन निवृत्तोऽप्याकाशवाण्या उक्तो मृत्युरेतत्संरक्षायां पुनरापतेत्। तस्मात् कंसवधार्थमेव एवं मन्त्रणेन संरक्ष्येत्यर्थः । धातुर्गतिरेव विवृतेति केचित् । एतस्याप्यनङ्गीकारे क्षणविलम्बेनेदानीं निवृत्तः पश्चादापतेच्चेत्तदा नापराधोऽस्ति देहिन इति पूर्वेणैव सम्बध्यते इति वा ॥ ५० ॥

ननु यद्यपि परमार्थोऽयं तथापि लोकविरुद्धं न कर्त्तव्यं पुत्रदानमनुचितमितिचेत्तत्राह—

अग्नेर्यथा दारुवियोगयोगयो-
रदृष्टतोऽन्यन्न निमित्तमस्ति ॥
एवं हि जन्तोरपि दुर्विभाव्यः
शरीरसंयोगवियोगहेतुः ॥ ५१ ॥

अग्नेरिति ॥ न हि मया समर्पित इत्येव म्रियते । किन्तु यदि तथाऽदृष्टं भविष्यति तदैव मरणम् । तत्रोपपत्तिः । अरण्ये दावानलेन दह्यमाने निकटस्थितः कश्चिन्न दह्यते । दूरस्थित-

श्च दृश्यते । तस्मादत्र निमित्तमदृष्टमिति । पुत्रादीनां देहवियोग-योगयोरप्यदृष्टमेव निमित्तम् । हि युक्तश्चायमर्थो भरतादिषु दृष्टः । स हि हरिक्षेत्रे हरिणदर्शने मृतः कालञ्जरे हरिणो जात इति किमत्र हरिणशरीरग्रहणे तत्रापि कालञ्जरे निमित्तं दृष्टं सम्भवति । जन्तुश्च जीवः सर्वत्र जायमानः । तत्र दृष्टस्य बाधितत्वात् कल्पनाया अशक्यत्वाच्छशरीरसंयोगवियोगहेतु-र्दुर्विभाव्यः ॥ ५१ ॥

तस्माददृष्टवशात् पश्चात् किमप्यस्तु, इयं तु सांप्रतं मोचनी-येति निर्द्धारितमित्याह—

श्रीशुक उवाच ॥

एवं विमृश्य तं पापं यावदात्मनिदर्शनम् ॥
पूजयामास वै शौरिर्बहुमानपुरःसरम् ॥ ५२ ॥

एवं विमृश्येति ॥ स्वकर्त्तव्येऽयं विमर्शः । कंसश्चेत्तदङ्गी-कुर्यात्तदा सिद्ध्येत् । तस्य सिद्धिर्दुर्घटेति । तस्य दूषणानि वदन् प्रयत्नाधिक्यं कृतवानित्याह ॥ तं प्रसिद्धं दिग्विजयिनं पापमेता-दृशकर्मकर्त्तारं पूजयामास । पूजायां हि स्वस्मिन् स्थितो भावा-दिः पूज्ये समारोप्यते । ततः कार्यं सेत्स्यतीति । अयमलौकिक उपायः । ननु किमर्थमेतावत् कृतवानित्याह ॥ यावदात्मनिदर्शन-मिति ॥ आत्मनो निदर्शनं ज्ञानं यावद्भवति दृष्टादृष्टभेदेन ता-वदुपायकरणं युक्तमिति प्रथममदृष्टोपायं कृतवानित्याह ॥ पूज-यामासेति ॥ वै निश्चयेनेति पूजने कार्यसिद्धिं निश्चितां मत्वा । तत्र स्वदेवता समारोपितेति बहुमानपुरःसरं पूजा । इयं पूजा स्तोत्रनमस्कारप्रह्वीभावात्मिका । एवं करणे ज्ञानप्राप्तेर्हेतुमाह ॥ शौरिरिति ॥ शूरो वसुदेवस्य पिता ॥ ५२ ॥

पूजयित्वापि ज्ञापनां कृतवानित्याह—

**प्रसार्य वदनाम्भोजं नृशंसं निरपत्रपम् ॥**
**मनसा दूयमानेन प्रहसन्निदमब्रवीत् ॥ ५३ ॥**

प्रसार्येति ॥ स्वस्य वदनाम्भोजं प्रसार्य विकासितं कृत्वा आत्मानमप्रतारकं हितं च ज्ञापयित्वाऽधिष्ठानस्य दुष्टत्वादारोपिता देवता तत्र स्थास्यति न वेतिसन्देहाद् दूयमानेन मनसा दुःखाविष्टेनान्तःकरणेन उपलक्षितोऽपि तदाऽऽकारसङ्गोपनार्थं प्रहसन् एतावत्यर्थे किमेतावत् क्रियत इति वदन्निवेदं वक्ष्यमाणमब्रवीत् । अधिष्ठाने दूषणद्वयं येन देवता न सन्निहिता भवति– क्रौर्यलज्जाभावौ क्रोधकामनिधानभूतौ । तावाह ॥ नृशंसं निरपत्रपमिति ॥ कामसेवका एव निरपत्रपा भवन्ति । पृष्ठस्वीकृतह्रीभया इति वाक्यात्।नृशंसः क्रूरात्मा तामसक्रोधयुक्तः ॥५३॥

आत्मीयतया तं गृहीत्वा हितमिवाह—

**वसुदेव उवाच ॥**

**न चास्यास्ते भयं सौम्य यद्वै त्वाहाशरीरवाक् ॥**
**पुत्रान् समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥**

न चास्यास्त इति॥अस्याः सकाशात् ते भयं न चास्ति। चकारान्न मत्तो भविष्यति वा । वाणीप्रामाण्यादेव । अतो निरपराधवधो न कर्त्तव्यः । सौम्येति सम्बोधनं सौम्यो भव । विज्ञापितं कुर्विति सम्बोधनार्थम् । अत्रार्थे प्रमाणमाह ॥ यद्वै त्वाहेति ॥ एतदुभयत्रापि प्रमाणम् । अतोऽस्याः पुत्रान् तुभ्यं समर्पयिष्ये । यतः पुत्राद् वाक्यतस्ते भयं सम्यग् उत्थितम् । निवेदिते त्वदीयस्त्वां न मारयिष्यति । कापट्यशङ्काभावाय बहुवचनम् ॥ ५४ ॥

एवं दृष्टादृष्टोपायस्य कृतत्वादङ्गीकृतवानित्याह—

श्रीशुक उवाच ॥

सुहृद्वधान्निववृते कंसस्तद्वाक्यसारवित् ॥
वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद् गृहम् ॥५५॥

सुहृद्वधादिति॥ विवेक उत्पन्ने विचारप्रवणं चित्तं जातमतः सुहृदियं भगिनी किमिति हन्तव्येति सुहृद्वधान्निववृते। वसुदेवः प्रतारयतीति तु शङ्का नास्ति । यतस्तद्वाक्यस्य सारं सत्यत्वमयं जानाति। वसुदेवो न कदाचिदप्यनृतवादीति । अत एव भगवदवतारः । निवृत्तो रथं प्रेरयित्वा गृहे नीतावित्यऽध्यवसीयते। अत एव वसुदेवोऽपि तन्मनोगतकालुष्यस्य गतत्वात् प्रीतः सन् प्रशस्य पुनः स्तुत्वा मार्गस्यातीतत्वाद् गृहं प्राविशत् ॥५५॥

एवमनर्थसमाधानं कथञ्चित् कृतम् । एतद्भगवतैव कृतमिति वक्तुमग्रिमं कार्यं समीचीनमेव जातमित्याह षड्भिः—

अथ काल उपावृत्ते देवकी सर्वदेवता ॥
पुत्रान् प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥

अथेति ॥ अथ तदनन्तरमेव शीघ्रमेव काले ऋतुसमये उपावृत्ते जातेऽष्टवर्षमध्ये सर्वानेव पुत्रान् सुषुवे।कन्यायामासक्तिर्जातेति कन्यां च॥अनुवत्सरमिति॥प्रतिवत्सरमेकैकः पुत्रो जातः, पूर्णगर्भाश्च ते। एवं निरुपद्रवतया प्रसवे हेतुः, सर्वदेवतेति॥सर्वा देवता रक्षणार्थं यत्र । कन्या नवमी । चकारस्तज्ज्ञापकः। प्रसवे न कोऽपि संवत्सरो व्यवहित इत्युपसर्गः ॥ ५६ ॥

यथैतया पुत्राः प्रसूतास्तथा वसुदेवोऽपि स्वोक्तं कृतवानित्याह—

कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः ॥
अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥ ५७ ॥

कीर्तिमन्तमिति ॥ ज्येष्ठो हि पुत्रः सर्वेषामदेयः । तत्रा-

ऽपि महान् । तादृशमपि दत्तवानिति स्वस्य धर्मनिष्ठतां ज्ञापयितुं, कीर्त्तिमन्तं प्रथमजमित्युक्तम् । कंस इति नाम्ना क्रौर्यं ज्ञापितम्॥ आनकदुन्दुभिरिति, सत्यवाक्यत्वे हेतुः । स्वयं गृहीत्वा अर्पयामास ॥ कृच्छ्रेण कष्टेन शोकं संस्तभ्य । ननु अनृतकथनमप्यऽधर्मः । पुत्रसमर्पणमपि। तत्र प्राणसङ्कटे अनृतं न जुगुप्सितमिति पुत्रमेव कथं न स्थापितवानित्याशङ्क्याह ॥ सोऽनृतादतिविह्वलः । पुत्रास्तु देहसम्बन्धिनः ॥ सत्यं तु भगवत्सम्बन्धि । तथा सत्यनृते कृते न भगवत्सानिध्यं भविष्यतीत्यतिविह्वलः । यतोऽयमानकदुन्दुभिः । अस्य पुत्रापेक्षयाऽपि सत्यमेव संरक्ष्यं भगवत्प्रापकम् ॥ ५७ ॥

ननु पुत्रसमर्पणं दृष्टं, सत्यमदृष्टम् । कथं दृष्टादृष्टयोर्विपरीतो बाध्यबाधकभाव इतिचेत्तत्राह—

**किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् ॥**
**किमकार्यं कदार्याणां दुस्त्यजं किं धृतात्मनाम् ॥५८॥**

किं दुःसहमिति ॥ पुत्रस्यादाने किं मोहो हेतुर्लौकिकः, शास्त्रं वा । आद्यं दूषयति । साधूनां शत्रुमित्रोदासीनेषु तुल्यस्वभावानां किं दुःसहम् । मोहवशादेव पुत्रादिवियोगो दुःसहः।तदभावे यथा पुत्रस्तथा कंसः।ततश्च कंसघातकः पुत्रो न संरक्ष्य इति युक्तं दानम्।अथ,पुत्रेण जयते लोकान्,पुत्रेण वसुतामेति, पुन्नाम्नो नरकात् त्रायत इति, त्वं यज्ञ इत्यादिवाक्यैः पुत्रकृतोपकारोऽपेक्षित इतिचेत् तत्राह ॥ विदुषां ज्ञानयुक्तानां किं बहिःस्थितमपेक्षितमिति । न साधनं नापि फलम् ॥ ननु तथापि वधार्थं स्वतो बालकमज्ञं समर्पयतीत्ययुक्तमितिचेत्तत्राह॥ किमकार्यं कदर्याणामिति॥ असमर्पिते वसुदेवमनृतवादिनं ज्ञात्वा कृतसमयबन्धस्य निवृत्तत्वात् सर्वानेव पुत्रान् सर्वां भार्यां मां च मारयेदतस्त्यजे-

देकं कुलस्यार्थे इति न्यायेनार्पणमेवोचितम् । न चैतन्न करिष्यतीत्याशङ्कनीयम् । यतः कदर्याणां कंसादीनां किमकार्यम् । सर्वोल्लङ्घनेन लुब्धाः कदर्याः । कुत्सितायां दर्यां हृदयरूपायां सम्भवो येषां स्थितिर्वा । ननु तथापि पलायनादिकमेवोचितं, न तु निरपराधबालकस्याज्ञस्य मारणमिति चेत्तत्राह ॥ दुःस्त्यजं किं धृतात्मनामिति ॥ धृत आत्मा वासुदेवो यैः । सर्वं गच्छतु हरिस्तिष्ठतु इति येषां बुद्धिस्तेषामन्यत् सर्वं त्यक्तव्यं भगवद्बाधकम् । असमर्पणं च सर्वनाशकत्वाद् भगवद्बाधकमिति॥५८॥

भगवदीयानां त्याज्यवस्तुषु कोऽपि गुणदोषविचारो नास्तीति पूर्वप्रतिज्ञातस्य समर्पणं युक्तमेव । भगवत्कृतत्वान्नानिष्टं जातमित्याह—

दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ॥
कंसस्तुष्टमना राजन् प्रहसन्निदमब्रवीत् ॥ ५९ ॥

दृष्ट्वेति ॥ शौरेर्वसुदेवस्य पुत्रे स्वस्मिंश्च तुल्यतां दृष्ट्वा । अन्योन्यघातकत्वमुभयोर्ज्ञात्वा स्वस्यौदासीन्येन स्थितिरेव समता सत्ये वाक्ये चैव व्यस्थितिमचाञ्चल्यमेवमुभयेनापि सन्तुष्टः । राजन्निति सम्बोधनं राजधर्मस्तथैवेति ज्ञापनार्थम् । प्रकर्षेण हास्यं मुग्धोऽयमिति ज्ञापनार्थम् । इदं वक्ष्यमाणमब्रवीत् ॥५९॥

प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ॥
अष्टमाद् युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥ ६० ॥

प्रतियात्विति ॥ अनेन पञ्चवार्षिको नीत इति ज्ञायते । षष्ठश्चोदरस्थः । प्रतियात्विति वाक्यात् । अन्यथा,नयेत्येव वदेत्।

---

अनेन पञ्चवार्षिक इत्यादि॥ अत्रायं भावः। अग्रे निगडनिग्रहानन्तरमेव, जातं जातमहन्निति वक्ष्यमाणत्वात् समर्पणानन्तरममारणे तन्नोचितमिति मत्वाऽनादरेण तथा कथनादेतदनुपदमेव तत्कथन·

पुत्रानिति बहुवचनानुरोधेन तावत्कालं स्थापनम् । प्रतियातु व्याघुट्य गृहे यातु । अयं ते कुमारो, न तु मन्मारकः । अमारणे हेतुः— न ह्यस्मादस्ति मे भयमिति ॥ तर्हि समयबन्धो गत इति न आशङ्कनीयम् । यस्माद्युवयोरष्टमगर्भान्मे मृत्युर्विहित इति । स त्वमानीय देय इत्यभिप्रायः । अत एव नारदादीनामेतदसंमतम् । न हि भगवद्भक्तानामन्यनिष्ठाप्युचिता । अतोऽन्यथाकरणमप्युचितम् । किलेत्याकाशवाणीप्रतिसन्धानम् ॥ ६० ॥

तत्प्रियार्थमेव नयनमिति प्रकारान्तरेणापि तस्मिन् प्रीते पुत्रत्यागो न युक्त इति तद्वाक्यमङ्गीकृत्य पुनरानीतवानित्याह—

**तथेति सुतमादाय ययावानकदुन्दुभिः ॥**
**नाभ्यनन्दत तद्वाक्यमसतोऽविजितात्मनः ॥ ६१ ॥**

तथेति ॥ स्वयमेव गृहीत्वा ययौ । अविश्वासे हेतुः— आनकदुन्दुभिरिति ॥ अतिक्लेश एव भगवदागमनं न स्वास्थ्ये । आनकदुन्दुभयश्च नेदुर्भगवदागमनार्थम् । तदुभयं विरुद्ध्यते । अतो देवकृतस्य सत्यत्वात् कंसकृतमेवासत्यमिति मत्वा नाभ्यनन्दत । तस्य कंसस्य वाक्यम् एनं न मारयिष्यामीत्यभिप्रायपूर्वकम् । तत्र हेतुद्वयमाह ॥ असतः— अविजितात्मन इति ॥ असन् सर्वदा नैकविधोऽस्थिरवाक् च, घातकश्च । स्वतो युक्तिदार्ढ्यरहितश्च ॥ अतः केनचित् प्रथम एवाष्टम इति ज्ञापिते मारयिष्यत्येव । तस्मादसतो न विश्वासः कर्त्तव्यः ॥ ६१ ॥

किञ्च, नान्यवाक्यमपि तस्यापेक्ष्यते । यदैव राक्षसैर्भक्ष्यार्थं पुरुषाः प्रार्थयिष्यन्ते, तदैवैतान् घातयिष्यति । क्रोधोद्गमहेतूनां

---

मिति ज्ञायते । तथाच निग्रहे गर्भासंभव इति । अत एव, जातं जातमिति न कालभेदज्ञापकमित्यग्रे वक्ष्यते ॥ भगवतस्त्वलौकिकी रीतिरिति नानुपपत्तिः ॥

सम्भवात् । अजितान्तःकरणत्वादुत्पन्ने क्रोधे न विलम्बः।महता-मन्तःकरणमेव प्रमाणमिति तथैव जातमित्याह—

नन्दाद्या ये व्रजे गोपा याश्चामीषां च योषितः ॥
वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥

नन्दाद्या इति, अष्टभिः ॥ वसुदेवे कंसकृतं देवानां हित-कारि न भवतीति देवगुह्यकर्त्ता नारदः पर्यवसानानिष्टकर्त्तारं वसुदेवं पीडयितुं दैत्यरूपं कंसं चोद्वेजयितुं शीघ्रं भगवदागमनार्थं साधारणान् पिडयितुं वाक्यत्रयमुक्तवान् । तदाह । ये यमुना-पारे वृजे गोपा नन्दादयः । अमीषां च स्त्रियो यशोदाप्रभृतयः। चकारादन्या अपि कुमारिकाः । आस्मिन्नपि कूले वृष्णिवंशो-द्भवा वसुदेवादयो देवक्याद्याश्च यदुवंशोद्भवानां स्त्रियः ॥६२॥

एवमेकेन सर्वाननूद्य देवत्वं विधत्ते—

सर्वे वै देवताप्राया उभयोरपि भारत ॥
ज्ञातयो बन्धुसुहृदो ये च कंसमनुव्रताः ॥ ६३ ॥

सर्वे इति॥ स्त्रियः पुरुषाः सर्व एव देवताप्रायाः। ईषदस-माप्तदेवाः । मानुषभावस्याऽपि विद्यमानत्वात् । अतो देवषु यत् कर्तव्यं तदेतेष्वेव कर्तव्यमिति ज्ञापितम् ॥ उभयोरिति ॥ रोधसोर्येकेचित्तिष्ठन्ति पश्वादयोऽपि तेऽपि देवांशाः । भारते-ति सम्बोधनम् एतदाहेत्यनेन सम्बद्ध्यते ।नारदस्य तथाकथन-ममन्वानस्य विश्वासजनकं देवगुह्यमेतादृशमेवेति।किञ्च न केवल-मुदासीना एव देवाः, किन्तु कंसनिकटवर्त्तिनोऽप्यक्रूरादयः । ये ज्ञातयो गोत्रिणः कंसस्य ये बान्धवाः सम्बन्धिनो ये वा सुहृदो मित्राणि। ये च कंसस्य सेवकाः। चकारात् पित्रादयोऽपि ॥६३॥

सर्वे देवताप्राया इति कंसाय नारदः प्राहेत्याह—

एतत् कंसाय भगवान् शशंसाभ्येत्य नारदः ॥
भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥६४॥

एतदिति ॥ नारदस्य दुष्टत्वं व्यावर्त्तयति ॥ भगवानिति॥ शंसनमेकान्ते कथनं, युक्तिपूर्वकमुपाख्यानपूर्वकं च । तत्रैवोपाख्याने फलितानि वाक्यान्यत्रोपनिबद्ध्यन्ते । अत आनुपूर्व्यभावो न दोषाय । एतावतैव कार्यसिद्धेः । ननु देवानामागमने किं स्यादित्याशङ्क्याह ॥ भूमेरिति ॥ नाकपृष्ठे देवानां मन्त्रणं जातं, भूमेर्भारायमाणा ये कंसादयो दैत्या जातास्ते हन्तव्या इति । तद्धननार्थमेव देवागमनं वधोद्यमरूपं जातं, वधोद्यमं यथा भवति तथा एते देवताप्राया इति वाक्यम् ॥ ६४ ॥

एवं श्लोकत्रयमुक्त्वा ऋषौ गते कंसो यत् कृतवांस्तदाह पञ्चभिः—

ऋषेर्विनिर्गमे कंसो यदून् मत्वा सुरानिति ॥
देवक्या गर्भसम्भूतं विष्णुं च स्ववधं प्रति ॥६५॥

ऋषेर्विनिर्गम इति॥ अनुवादेऽपि येऽर्थास्ते पूर्वं नारदेन उक्ता इति ज्ञातव्यम् । ऋषिणैव निवारितमिति न ऋषेरग्रे किञ्चित् कृतवान् । द्वयं ज्ञातवान्, चतुष्टयं च कृतवान् । ज्ञातं द्वयमाह ॥ यदून् सुरान् देवान् मत्वा,देवक्या गर्भेऽष्टमे सम्भूतिर्यस्य तादृशं च विष्णुं स्वस्य कंसस्य वधं प्रत्येव देवकीगर्भसम्भूतिं विदित्वा ॥ ६५ ॥

देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ॥
जातं जातमहन् पुत्रं तयोरजनशङ्कया ॥ ६६ ॥

प्रथमतो देवकीं वसुदेवं चकारादन्यांश्च तदन्तर्गतान् स्वगृह एव निगडैर्निगृह्य जातं जातमानुपूर्व्येण जातम् । अष्टमसंख्याया अपेक्षाबुद्धिजन्यत्वाद् गणनायामनियमसम्भवाद्, अजनशङ्कया

विष्णुसन्देहात् षट्पुत्रानहत् । जातं जातमिति न कालभेदज्ञापकं, किन्तु मारणे देवक्यां जननमेव निमित्तमिति ज्ञापयितुम् । अन्यथा क्षत्रियाणां त्रयोदश एवाह्नि नामकरणसम्भवादुत्पन्न-मात्राणामेव मारणे,कीर्त्तिमन्तं सुषेणं चेत्यादिनामोक्तिराद्यस्कन्धे-ऽनुपपन्ना स्यात् ॥ ६६ ॥

नन्वेवं कथमतिदुष्कृतं कृतवानित्याशङ्क्याह—

**मातरं पितरं भ्रातॄन् सर्वांश्च सुहृदस्तथा ॥**
**घ्नन्ति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥६७॥**

मातरमिति ॥ अयं तु दैत्य एव । येऽप्यन्ये राजान-स्तेऽप्यसुतृपः केवलं प्राणपोषकास्तत्रापि लुब्धाः । लोभः सर्व-गुणनाशकोऽतस्तेषां गुणा न सन्तीति ज्ञापनार्थमुक्तम् ॥ प्रायश इति, लुब्धा इति च पदद्वयेन केचन धर्मात्मानो व्यावर्त्तिता अम्बरीषादयः । भुव्येवैव व्यवस्था । यतो युधिष्ठिरादयोऽपि पितामहादीन् मारितवन्तः । स्वस्य यत्रैव मरणसन्देहस्तानति-मान्यानपि मात्रादीन् पञ्चविधान् घ्नन्त्येव ॥ ६७ ॥

नन्वस्य स्वस्यापि देवत्वसम्भावनया तद्धिताऽऽचरणमेव कथं न जातमित्याशङ्क्याह—

**आत्मानमिह संजातं जानन् प्राग्विष्णुना हतम्॥**
**महासुरं कालनेमिं यदुभिः स व्यरुद्ध्यत ॥ ६८ ॥**

आत्मानमिति ॥ पूर्वमऽमृतमथने भगवता महाऽसुरः कालनेमिर्हतो देवपार्ष्णिग्राहेण । स एवाऽयं कंस इत्यात्मानं जानन् पुनर्देवप्रेरणयैव मारणार्थमायातीति यदूनां देवत्वात्तैः सर्वैरेव सह विरोधं कृतवान् ॥ ६८ ॥

अन्यदप्यत्यन्तायुक्तं कृतवानित्याह—

उग्रसेनं च पितरं यदुभोजान्धकाधिपम् ॥
स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः ॥ ६९ ॥
इति श्रीभागवते महापुराणे दशमस्कन्धे जन्मप्रकरणे हेतुनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥

उग्रसेनमिति ॥ नाम्नैव महत्त्वं निरूपितम् । स्वस्य पितरं सर्वसहाययुक्तम् ॥ यदुभोजान्धकाधिपम्॥यदवो भोजा अन्धकाश्च उपलक्षणमेतत् षड्विधानामपि यादवानाम् । तदाज्ञया ते सर्वे विपरीतं करिष्यन्तीति विशेषतस्तस्य बन्धनम् । बन्धकः स्वयमेव जात इत्याह॥स्वयं निगृह्येति॥ शूरसेनदेशस्तस्य भोगार्थं स्थितः अतस्तस्य पुनर्वचनं, शूरसेनान् बुभुजे इति ॥ एतत्सर्वकरणे सामर्थ्यं, महाबल इति ॥ एवं सर्वेषां देवांशानां भक्तानां महानुपद्रवो निरूपितो भगवदवतारे हेतुभूतः ॥ ६९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीवल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे प्रथमोऽध्यायः ॥ १० ॥ १ ॥

—:०:—

द्वितीयोऽध्यायः ॥ २ ॥

एवं हेतुं निरूप्याथ कृष्णोद्यम उदीर्यते ॥ महत्त्वज्ञापनार्थाय द्वितीये सविशेषणः ॥ दुःखं हेतुरिहागन्तुमिति बोधाय तत्कथा ॥ पुनर्निरूप्यते स्पष्टा शीघ्रागमनहेतुका ॥ सर्वेषां ज्ञापनार्थाय कंसवाक्यं तथा स्तुतिः ॥ अन्यथा भगवानेव प्रादुर्भूतः कथं

---

द्वितीयाध्यायार्थोक्तौ, कृष्णोद्यम इत्यादि ॥ भगवदुद्यमे हेतुमाहुः ॥ महत्त्वेति ॥ हेतोरिति शेषः ॥ अत एव तावन्तमपि विलम्बमसहिष्णुर्गर्भकर्षणमाज्ञप्तवान् । न ह्येवमन्यत्रेति भावः ॥ अथवाऽन्येभ्योऽवतारेभ्योऽत्र महत्त्वज्ञापनाय मायाज्ञापनवसुदेवादिमनःप्रवेशलक्षणः

भवेत् ॥ पूर्वं सामान्यतो विरोधमुक्त्वा शीघ्रं भगवदागमनार्थं लोके कंसकृतमत्युपद्रवमाह सार्द्धैस्त्रिभिः—

श्रीशुक उवाच ॥

प्रलम्बबकचाणूरतृणावर्तमहाशनैः ॥
मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥

प्रलम्बेति ॥ प्रलम्बो दैत्यो दैत्यरूपेणैव वर्त्तते । बको दैत्यः पक्षिरूपेण । चाणूरो दैत्यो मनुष्यरूपेण । तृणावर्त्तो राक्षसो वात्यारूपेण । एत एव महाशनाः। बहुभक्षकाः। अनेन यदूनां कदनं चक्रे इत्यत्र यादवा भक्षिता इत्यपि ज्ञापितम् । महाशनोऽघ इति केचित् । तत्र नामसु यौगिकप्रवेशश्चिन्त्यः । मुष्टिकश्चाणूरवत् । यथा प्रलम्बो बलभद्रहतः प्रथमनिर्दिष्टस्तथा मुष्टिकोऽपि । अरिष्टो वृषरूपो बकवत्। द्विविदो वानरः । पूतना राक्षसी । केशी अश्वात्मकः । धेनुको गर्दभात्मकः ॥ १ ॥

अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ॥
यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ २ ॥

अन्ये चैवंविधाः शतशः सन्ति ।असुरा भूत्वा ये भूपालाः। बाणो बलिसुतः । नरको भौमः । आदिशब्देन जरासन्धादयः गुप्तान् यदून् प्रलम्बादयो बाधन्ते । प्रकटान् बाणादयः। एवमेतैर्यदूनां कदनमन्यायनाशं चक्रे । एतेषामाज्ञाकारित्वे हेतुः ॥

---

स उच्यत इत्यर्थः ॥ अथवा महत्त्वं पुरुषोत्तमत्वं तज्ज्ञापनाय सविशेषणः स उच्यत इति सम्बन्धः । असाधारणत्वेनेतरेभ्यो व्यावर्तको धर्मो हि विशेषणम् । तदत्र मायाज्ञापनमेकम् । न हि ब्रह्मादिव्यामोहिकां तामन्य आज्ञप्तुमर्हति, सान्याधीना वा भवति । वसुदेवदुरासदत्वादिकं, देवक्यां स्वहन्तृज्ञानेऽप्यासुरभावत्याजनं कंसस्य, ब्रह्मादिस्तुतिश्च ॥

बलीति ॥ मागधो जरासन्धः श्वशुरः सहायभूतः । तेनापि दिग्विजये पराजितेन सुते दत्ते । एतेषामन्यतरेणाप्याज्ञोल्लङ्घने कृते जरासन्धः साधयतीत्याश्रयः ॥ २ ॥

पीडितानां कृत्यमाह–

ते पीडिता निविविशुः कुरुपाञ्चालकैकयान् ॥
शाल्वान् विदर्भान्निषधान् विदेहान् कोसलानपि ॥
एके तमनुरुन्धाना ज्ञातयः पर्युपासते ॥ ३ ॥

ते पीडिता इति ॥ पूर्वोक्तैः पीडिताः कुरुदेशान् हस्तिनापुरदेशान्, विविशुः । तथान्ये पाञ्चालदेशान् किम्पिलादिदेशान्, कैकयान् चित्रकूटादिदेशान्, शाल्वान् पश्चिमदेशान्, निषधान् उत्तरदेशान्, विदर्भान् दाक्षिणदेशान्, विदेहान् तीरभुक्तदेशान्, कोसलान् अयोध्यादेशान् नितरां विविशुः । गुप्ततया स्थिताः । एते धर्मात्मानो राजानः । अतः स्वदेशं परित्यज्य सकुटुम्बास्तत्रैव स्थिता इत्यर्थः ॥ ये पुनर्निर्गन्तुं न शक्तास्ते कंससेवका एव भूत्वा स्थिता इत्याह ॥ एक इति ॥ एके अक्रूरादयस्तमनुरुन्धानास्तं संवेष्ट्य तत्सेवकत्वेन स्थिता ज्ञातयो गोत्रिणः परित उपासते ॥ ३ ॥

एवं सर्वेषां महद् दुःखमुद्यमार्थं हेतुत्वेन निरूपितम् । भगवत उद्यमं वक्तुं देवक्या बन्धनावधि चरित्रमाह–

हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥
सप्तमो वैष्णवं धाम यमनन्तं प्रचक्षते ॥

---

देवक्या बन्धनाऽवधीति ॥ अत्रेदमाकूतम् । सप्तमे गर्भे जाते नन्दाद्या ये व्रज इत्यादि नारदेनोक्तम् । तदा षट्पुत्रहतिर्मातृबन्धनं च जातम् । तदत्र, हतेष्वित्येकेनानूद्य स गर्भो देवक्या हर्षशोकवि-

**गर्भो बभूव देवक्या हर्षशोकविवर्द्धनः ॥ ४ ॥**

हतेष्विति सार्द्धेन ॥ देवक्याः षट्सु बालेषु औग्रसेनिना हतेषु सत्सु । भागिनेयान् हन्तीति पितृनाम्ना निर्देशः । अन्येषां हननमर्थसिद्धमेव । लोके हि भागिनेयोऽतिमान्यः । षड्गुणास्तेन बुद्ध्या हता इति धर्मस्थानभूतोऽक्षरात्मा समागतः । तस्यापि मारणमाशङ्क्य परिहरति ॥ वैष्णवमिति ॥ विष्णोर्व्यापकस्य सर्वरक्षकस्य स्वरक्षायां सन्देहो नास्तीति ज्ञापितम् । सप्तम एव परमाऽवधिः । षड्गुणाः सप्तमो धर्मी च तदाधारभूतः । पुरुषोत्तमस्तु ततो महान् । अतस्तज्ज्ञाप्त्यर्थं, धामेति ॥ यतो लोका यमनन्तं कालात्मकमाचक्षते । सोऽनन्तः सप्तमपर्याये गर्भः प्रकटो बभूव । स चार्द्धप्रकटितानन्द इति देवक्या हर्षशोकविवर्द्धनो जातः।महानिति हर्षः।तादृशोऽपि मारणीय इति शोकः। प्रभावस्यादर्शनात् ॥ ४ ॥ ॥ एवं सति भक्तेषु दया स्थापितेति दयापरीतो भगवान् शीघ्रमुपायं कृतवानित्याह—

**भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ॥**
**यदूनां निजनाथानां योगमायां समादिशत् ॥ ५ ॥**

---

वर्द्धनो बभूवेत्यर्द्धेन शीघ्रं भगवदुद्यमे हेतुरुक्तः । पूर्वं शोकवर्द्धनो नासीत् । हतेषु तेषु अयमपि तथा भविष्यतीति ज्ञानेन तथा बभूव । तथाचेदं सर्वं बन्धनानन्तरं जातमिति तदेव पूर्वावधिर्यस्य तादृशं चरित्रमाहेत्यर्थः । अत एवाग्रे वक्ष्यन्ति– षट्पुत्रवधात् पूर्वमेव सङ्कर्षणगर्भ इति । आसुरहननं सङ्कर्षणगर्भविषयकं दुःखं च भगवच्चरित्रमेव । तर्हि हर्षवर्द्धनत्वमनुपपन्नमित्याशङ्क्य तत्रोपपत्तिमाहुः ॥ स चार्द्धेत्यादि ॥ पुरुषोत्तमस्यैव पूर्णानन्दत्वान्मातुर्मनसि तदागमने तत्रानन्दाविर्भाव एवाभूत्, परस्य परं तादृशी नाभून्निरोधवशादिति सरस्वतीदृष्टान्तेन वक्ष्यते । अस्यानन्दमयत्वेऽपि प्रभुसङ्गम एव पूर्णानन्दप्राकट्यकरणं भवतीति तथा ॥

भगवानिति ॥ षड्गुणैश्वर्यसम्पन्नः पूर्वापराधे प्रतीकारं कर्तुं सप्तमे स्पृष्टे तेनैव हननसम्भवात् प्रतीकारो न भविष्यतीति शीघ्रं च स्वयमागन्तुं गर्भमन्यत्र नेतुं योगमायां समादिशत् या जगत्कारणभूता भगवच्छक्तिः सा योगमाया। लोकानां दुःखपरिज्ञानार्थं, विश्वात्मेति ॥ यदूनां कंसजं भयं विदित्वा। सर्वस्यैव स्वरूपं जानाति, किं पुनर्यादवानाम्। तेषामेव दुःखे सति प्रतीकारे हेतुः— निजनाथानामिति ॥ निजः स्वयमेव नाथो येषाम्। केवलमिच्छयैव सर्वं न भवतीति दृष्टकारणार्थं योगमायादेशः ॥ ५ ॥

आज्ञामेवाह—

गच्छ देवि व्रजं भद्रे गोपगोभिरलङ्कृतम् ॥
रोहिणी वसुदेवस्य भार्यास्ते नन्दगोकुले ॥
अन्याश्च कंससंविग्ना विवरेषु वसन्ति हि ॥ ६ ॥

गच्छदेवीति नवभिः ॥ प्रथमतो व्रजं गच्छ। तत्र गता स्वास्थ्यं प्राप्स्यतीति। मथुरायां दैत्यावेशात् तेषां च भगवान् मायारूप इति इयमपि तत्र प्रविष्टा तेषामेव कार्यं साधयेत्। अतः केवलदेवाऽऽश्रितं गोकुलमेव गच्छेत्याज्ञा। यतस्त्वं देवतारूपा न दैत्यहितकारिणी। अतस्तथा सम्बोधयति ॥ व्रजपदेन जङ्गमत्वमुक्तम्। अतः स्थावरान्नगरादुत्कर्षः। ननु तत्र स्थितानां देवानां मायागमने व्यामोहसम्भवाद् वैपरीत्यं स्यादिति शङ्कां वारयति ॥ भद्र इति ॥ त्वं कल्याणरूपा। देवानां या देवता कल्याणरूपा ऐहिकसुखदा सा मुग्धैरत्यन्तं सम्मान्यत इति। तदर्थमाह ॥ गोपगोभिरलङ्कृतमिति ॥ गोपा गोप्यश्च गावश्च

---

स्थावरान्नगरादिति ॥ न गृणातीति नगरमतः स्थावरतुल्यम्। अभिमानेन स्तब्ध एव तिष्ठतीति तथा ॥

ते उभये तस्य स्थानस्यालङ्करणभूताः । तैरेव तत्रत्या शोभा। योऽन्यस्तिष्ठति स तु तदनुगुण एवेति तेषामप्रतिबन्धो निरूपितः। अतो दर्शनादेव तत्र सुखं निरूपितम् । तत्र गतायाः किं प्रयोजनमित्याकाङ्क्षायामाह॥ रोहिणीति॥ वसुदेवस्य भार्या रोहिणी तत्राऽऽस्ते। स्थितौ कः सम्बन्ध इत्यत आह॥ नन्दगोकुल इति॥ नन्दसम्बन्धिगोकुले। अनेन नन्दवसुदेवयोर्भ्रातृत्वं द्योतितम्। अत्र पादद्वयमधिकं, किमिति तिष्ठतीत्याकाङ्क्षार्थं निरूपितम्। अन्याश्च स्त्रियो वसुदेवस्यान्येषां वा कंससंविग्नाः सत्यो विवरेषु गुप्तस्थानेषु वसन्ति। भयदशायां तथैव स्थितिर्युक्तेति हिशब्दार्थः॥ ६॥

ततः किमत आह—

देवक्या जठरे गर्भं शेषाख्यं धाम मामकम्॥
तत् सन्निकृष्य रोहिण्या उदरे सन्निवेशय॥ ७॥

देवक्या इति॥ जठर इति इतरगर्भवैलक्षण्यार्थम्॥ तदिति प्रसिद्धम्॥ ततः सन्निकृष्य रोहिण्या उदरे सम्यग् निवेशय। किं तद्गर्भरक्षायामित्याकाङ्क्षायामाह॥ शेषाख्यमिति॥ शेष इत्याख्या यस्य। तस्मिन्नष्टे भूमिरेव निमग्ना भविष्यतीति। ननु तस्याऽऽकर्षणे नाशशङ्का स्यादित्यत आह॥ मामकं धामेति॥ भगवत्तेजोरूपम्। भगवतोऽपि स्थानभूतं वा न नश्यतीति॥ ७॥

तर्हि स्थितावेव कंसभयाभावात् को दोष इतिचेत्तत्राह—

अथाहमंशभागेन देवक्याः पुत्रतां शुभे॥
प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि॥८॥

अथाहमिति॥ अयं पुरुषोत्तमो यो मायामाज्ञापयति। भक्तिमार्गे तस्यैव सेव्यत्वाद् आरम्भे, यदूनां निजनाथानामिति वचनात्। स चतुर्द्धाऽत्र समायास्यति। तदर्थमाह॥ अथ शीघ्रं

तदनन्तरमेव अहं पुरुषोत्तमः, अंशानां वासुदेवसङ्कर्षणप्रद्युम्नाऽनिरुद्धानां भागेन विभागेन चतुर्द्धाकार्यकरणाद् देवक्याः पुत्रतां प्राप्स्यामि । भागेनेत्येकवचनं प्रद्युम्नांशेनैव पुत्रत्वमिति ज्ञापनार्थम् ॥ अथाहमिति सन्दर्भेण यथा त्वं गमिष्यसि अन्यत्रोत्पन्नान्यत्र, तथाहमपीति ज्ञापितम् ॥ पुत्रतामिति लोकप्रतीत्या तद्धर्मवत्त्वं ज्ञापितम् । न त्वहं पुत्रो भविष्यामि । शुभ इति सम्बोधनेन त्वद्गमनेन मद्रमणस्थानं शोभायुक्तं भविष्यतीत्याग्रिमाज्ञापने हेतुकथनार्थम् । तस्या भगवदेकशरणाया वैकुण्ठे केवलं स्थातुमयुक्तमिति तामपि जननार्थमाज्ञापयति । त्वं यशोदायां नन्दपत्न्यां भविष्यसीति ॥ ८ ॥

स्तन्योत्पादनार्थं मोहजननार्थं मारणार्थं च यद्यप्युत्पाद्यते, तथापि तस्यास्तदनिष्टमिति तदनुक्त्वा फलान्तरमाह—

**अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥**
**धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ ९ ॥**
**नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ॥**
**दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥ १० ॥**
**चण्डिका कुमुदा कृष्णा माधवी कन्यकेति च ॥**
**माया नारायणीशानी शारदेत्यम्बिकेति च ॥ ११ ॥**

अर्चिष्यन्तीति ॥ मनुष्या इति देवांशा दैत्यांशाश्च निवारिताः । देवांशास्तु भगवत्सेवका एव । दैत्यांशास्तु न भजन्त एव । अर्चनायां फलं हेतुः । सर्वासां कामनानां वराणामीश्वरीमिति । काम्याः सोपाया विषयाः । वरा अनुपायाः । स्त्रियः साक्षात्सेवा तस्या अपि बाधिकेति तन्निवृत्त्यर्थं, धूपोपहारबलिने, ति ॥ पूजायां साधनत्रयं निर्दिष्टम् । धूपो दूरादेव सम्भवति, उपहारश्च । दीपस्तु स्वतःप्रकाशमानाया उपयोगी न भवतीति

नोक्तः । बलिः पशूनां दानम् । पूर्वं काम्यादीनां प्रभुत्वे उक्ते-ऽप्यदातृत्वेऽभजनीया स्यादिति तद्दातृत्वमपि तस्यां भगवान् स्थापयति ॥ सर्वकामवरान् प्रकर्षेण ददातीति ॥ तस्याः सांनि-ध्यार्थं मन्त्ररूपाणि नामानि स्थानान्याह ॥ नामधेयानीति ॥ कुर्वन्तीति वर्त्तमानसामीप्ये । नामस्वेव स्थानान्यपि प्रसिद्धानि भवन्ति । चकारादधिष्ठानानि ॥ नरा इति पूर्ववत् ॥ भुवीति स्थापनाऽर्थम् ॥नामान्याह ॥दुर्गेति॥ सर्वत्रेति–शब्दो मन्त्रदेश-भेदेन प्रसिद्धिप्रतिपादनार्थः । दुर्गा काश्यां प्रसिद्धा । भद्रकाली अवन्त्यां, विजया उत्कले, वैष्णवी महालक्ष्मी कुल्लापुरे, चण्डिका कामरूपदेशे, मायाशारदे उत्तरदेशे, अम्बिका अम्बिकावने, कन्यका कन्याकुमारी । अन्यान्यपि प्रसिद्धानि स्थानानि । तथैव मन्त्रा ज्ञेयाः ॥ ९ ॥ १० ॥ ११ ॥

एवं तस्या नामान्युक्त्वा, शेषस्यापि नामान्याह—

**गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि ॥**
**रामेति लोकरमणाद्बलभद्रं बलोच्छ्रयात् ॥ १२ ॥**

गर्भसङ्कर्षणादिति ॥ गर्भरूपस्य तस्य सङ्कर्षणात् सं-कर्षणः । सम्यक् कर्षणं यस्येति । प्राहुरिति प्रमाणम् । भुवीत्य-ऽवतारदशायामेव । वस्तुतस्तु सङ्कर्षणश्चतुर्मूर्त्तेर्भगवतो द्वितीयः, सोऽप्यत्राविष्टस्तथापि लोका गर्भसङ्कर्षणादेव सङ्कर्षणं वदन्ति । नामान्तरमाह ॥ रामेति ॥ लोकस्य रमणं यस्मात् । रमयतीति रामः । राम इति वक्तव्येऽविभक्तिकनिर्देशोऽसंमत्यर्थः । सं-बुद्धिरूपो वा व्यवहारार्थः । बलभद्रमपि प्राहुः । बलेन भद्र इति । बलोच्छ्रयाद्, न तु बलकार्यात् ॥ १२ ॥

ईश्वरवाक्यादादेशानन्तरमेव तथा कृतवतीत्याह—

श्रीशुक उवाच ॥

**संदिष्टैवं भगवता तथेत्योमिति तद्वचः ॥**
**प्रतिगृह्य परिक्रम्य गां गता तत्तथाऽकरोत् ॥ १३ ॥**

संदिष्टैवमिति ॥ भगवतेत्यनुल्लङ्घनार्थः । तथेति करणाऽर्थं, जननार्थं च । ॐमिति पूजाद्यर्थम् । तस्य भगवतो वचः परिगृह्य परिक्रमणं कृत्वा गां भूमिं गता सती तथैवाकरोत् तत्सर्वं भगवन्निर्दिष्टम् ॥ १३ ॥

तत्कार्यं लोके प्रसिद्धं जातमित्याह—

**गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया ॥**
**अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥ १४ ॥**

गर्भे प्रणीत इति ॥ गर्भे प्रकर्षेण नीते रोहिण्युदरं प्रापिते ॥ योगनिद्रयेति कर्षणप्रापणयोः सर्वाज्ञानं निरूपितम् । अहो इत्याश्चर्ये ॥ विस्रंसित इति ॥ स्रंसु ध्वंसु अधःपतने । तेन पञ्चमो मासः षष्ठो वेति ज्ञापितम् । पौराः पुरवासिनः । अनेन सर्वप्रतीतिर्जातेत्युक्तम् । राक्षसैः कंसप्रेरितैर्विस्रंसित इति विचुक्रुशुः । अत्याक्रोशं कृतवन्तः ॥ १४ ॥

अथाक्रोशानन्तरं विस्रंसनज्ञानानन्तरमेव भगवान् वसुदेवद्वारा देवक्यामागत इत्याह—

---

अथाक्रोशानन्तरमित्यादि ॥ ननु मूल एतदानन्तर्यवाचकपदाभावात् स्वयं तत्कथनमनुपपन्नमिति भातीतिचेन्नैवम् । भावानवबोधात् । तथाहि । इह हि शीघ्रं स्वागमनार्थमेव गर्भकर्षणाज्ञापनम् । तत्तु, गां गता तत्तथाकरोदित्येतावतैव निरूपितमभूत् । आक्रोशस्तु प्रकृतानुपयुक्तः । एवं सत्यपि गर्भे प्रणीत इति श्लोककथनं यत्तद्भगवद्वाक्यस्थाऽथशब्दतात्पर्यकथनायेति ज्ञायते । अन्यथा, तत् सन्निकृष्य रोहिण्या उदरे सन्निवेशयेत्युक्ते प्रयोजनाकाङ्क्षायामहं देवक्याः पुत्रतां प्राप्स्यामीत्येतावतैव चारितार्थ्यादथशब्दं न वदेत् ।

**भगवानपि विश्वात्मा भक्तानामभयङ्करः ॥**
**आविवेशांशभागेन मन आनकदुन्दुभेः ॥ १५ ॥**

आविवेशेति,सार्द्धभ्याम्॥निषेकाभावेऽपि पूर्वं वसुदेवे तत-स्तद्द्वारा देवक्यामागमनस्यायं भावः। अत्र हि न नृसिंहहंसादि-वत् प्राकट्यं, किन्तु यदुवंशसम्बन्धित्वेन शूरपौत्रत्वेन वसुदेव-पुत्रत्वेन। जीवे शरीरस्यैव वंशसम्बन्धित्वेन तस्य च निषेक-जन्यत्वेन तथोत्पत्तिरुच्यते। ईश्वरे प्राकट्यस्यैवोत्पत्तिपदार्थ-त्वाद्वक्ष्यमाणप्रकारेण वसुदेवद्वारा देवक्यामाविर्भाव उच्यते। अन्यथा देवक्यामेव तथोच्येतेति। आनकदुन्दुभेर्मनो भगवान् आविवेश। अयोगोलके वह्निरिव। अन्यथा आनकदुन्दुभित्वं व्यर्थं स्यात्। अंशानां भागेन विभागेन। केचित्तु अंशेन नारायणरूपेण, भागेन केशवरूपेण सह स्वयं प्रद्युम्न आविवे-शेत्याहुः। पुरुषोत्तमस्तु नन्दगृह एव मायया सह जातः। अन्यथा, देवकीजठरभूरितिवत्, तव सुत इति कथं वदेयुः।

---

एवं सति यस्मादानन्तर्यं प्रभुबुद्धिस्थं स पदार्थो गर्भे प्रणीत इति श्लोकेन विवृतः श्रीशुकेन। आचार्यैरपि तमेवाथशब्दं प्रतीकत्वेनो-क्त्वा, गर्भइतिश्लोकोक्ततात्पर्यमाक्रोशानन्तरमित्यादिनाऽनूदितम्। अयमर्थो भगवतोऽत्यन्तं गोपनीय इति तत्सम्पत्तिर्लोकानामन्यथा-ज्ञानोक्त्या तत एव तदज्ञानसूचनेन च ज्ञापितेति सर्वमनवद्यम्॥

पुरुषोत्तमस्तु नन्दगृह एवेत्यादि, भवतीत्यन्तम्॥ अत्रायं भावः। उक्तवाक्यानुरोधान्नन्दगेहे पुरुषोत्तमाविर्भावोऽवश्यमङ्गीकार्यः। एवं सति, सुतं यशोदाशयने निधायेत्यग्रिमवाक्यं चानुपपन्नं भवति॥ तत्र स्वरूपद्वयदर्शनप्रसङ्गात्। आगतस्य तिरोधानं न वक्तुं शक्य-मागमनवैयर्थ्यापातात्। प्रागयं वसुदेवस्येतिवाक्यविरोधश्चेति उभयतस्पाशा रज्जुरितिचेत्। अत्र ब्रूमः। नन्दगेहे प्रादुर्भूतस्यैव पुरुषोत्तमस्य सर्वतःपाणिपादान्तत्वेन तदा कार्यमस्तीति वसुदेव-गृहे प्रादुर्भाव इति ज्ञायते। स एव, बभूव प्राकृतः शिशुरित्यनेन

भवत्स्वरूपाद्व्यतिरेकतः । ल्यब्लोपे पञ्चमी । तथाच व्यतिरेकं प्राप्यैव सन् । अन्यथैकरसे ब्रह्मणि विविधरूपत्वभानं न स्यादिति यो व्यवस्यते सोऽबुधः। धर्मिग्राहकमानेन शुद्धस्यैव ब्रह्मणस्तथैव सिद्धेः । एतदेवाह ॥ विनेति ॥ वस्तुन एव तथात्वादाकारदर्शनानन्तरं यो भक्तकृतः,कराऽम्बुजं पदाऽम्बुजं नयनाऽम्बुजमित्यादिरूपो वादः सोऽनुवादः, तं विना तत् कराम्बुजाऽऽदिकं स्वरूपव्यतिरिक्तत्वेन मनीषितं मनसा सत्त्वेनाकलितं न हि भवति । ननु प्राकृतेष्वपि भगवत्संबन्धात् सत्त्वोत्पत्त्या तथा प्रतीतौ न दोष इत्यत आह ॥ सम्यगिति ॥ स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः, असङ्गो ह्ययं पुरुषः । अथाऽत आदेशो नेति नेतीत्यादिश्रुतिविचारदशायां त्यक्तं प्राकृतधर्ममुपाददद्भवतीत्यर्थः । तैः सह सम्बधे सति हि तेषु सत्त्वोत्पत्तिसंभावना । तस्यैवाभावात्तदसंभव इति भावः ॥ अथवा,यः पुमानात्मनो द्रष्टुः स्वस्य दृश्येषु गुणेषु करपादादिषु भगवान् सन् वर्त्तमान इति व्यवस्यते सोऽबुधः । तत्र हेतुः ॥ अस्वव्यतिरेकत इति ॥ तेष्वात्मत्वेनाभिमतादभिन्नत्वादित्यर्थः । अव्ययाऽन्तप्रयोगेणाविकृतत्वं सूच्यते करादिषु । शेषं पूर्ववत् ॥ अतोऽस्मिन्नपि पक्षे कोऽपि त्वयि प्राकृतो धर्मो नास्तीति वासुदेवो भगवान् ॥ १८ ॥ ❀ ॥ प्रद्युम्नरूपं भगवन्तं निरूपयति—

> त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो
> वदन्त्यनीहादगुणादविक्रियात् ॥
> त्वयीश्वरे ब्रह्मणि नो विरुद्ध्यते
> त्वदाश्रयत्वादुपचर्यते गुणैः ॥ १९ ॥

त्वत्तोऽस्येति ॥ स हि जगत्कर्त्ता निरूपितः । स्मृतिर्हि

तस्य श्रीः। स तस्यां प्रकृतिमुत्पादितवान। न ततः काचित् पुरुषोत्पत्तिः। प्रकृतौ स्त्र्येव प्रधानभूता। पुरुषस्तु गुणभूतः। तया प्रकृत्या सृष्टिस्थितिप्रलया भवन्ति। संकर्षणादुत्पन्नेनैव सूत्रनाम्ना तस्यामुत्पाद्यत इति। जगदुत्पत्तिस्थितिप्रलये परम्परया संनिधिमात्रेण प्रद्युम्नस्योपयोगः। तन्मात्रेणैव लोकः प्रद्युम्नात् सृष्टिमाह। न तु वासुदेववदपि ततः सृष्टिरस्ति। तदत्रानूद्यते। त्वत्तः प्रद्युम्नरूपाद् भगवतोऽस्य जगतो जन्मास्थितिसंयमान् उत्पत्तिस्थितिप्रलयान् लोका वदन्ति। तथा कथने हेतुः ॥ विभो इति ॥ समर्थत्वाद् वदन्तीत्यर्थः। नन्वस्तु तथैव, को दोष इति चेत्तत्राह ॥ अनीहादगुणादविक्रियादिति ॥ यो हि चेष्टां करोति स एवोत्पादयति। यस्तु महदैश्वर्यादिगुणानवलम्बते स पालयति। पालनं ह्याज्ञयैवाविकृतादपि संभवति। यस्तु क्रोधादिविक्रियां प्राप्नोति स संहारको भवति। अयं च सत्त्वरजस्तमोगुणातीतः। अत एव नास्य कापि विक्रिया। अतः कूटस्थोऽयं निरीहः। तस्मादघटमानमेवालौकिकसामर्थ्यस्य विद्यमानत्वाल्लोको वदति। यद्ययं कर्तुमिच्छेत्तदा गुणानप्युत्पादयेत्। विकृतश्च भवेदुत्पत्त्यादिकमपि कुर्यात्। चिन्तामणिरिव वा स्वत एव कुर्यात्। तर्हि विरोधेऽन्यतरपरित्यागस्योचितत्वादन्तरङ्गबहिरङ्गयोरन्तरङ्गं वलीय इति न्यायेनान्तरङ्गा एव स्वरूपधर्मा वलिष्ठाः, न तु लोकप्रतीतिर्बहिरङ्गेति भगवतो जगत्कर्तृत्वाभाव एवाऽस्मिन् पक्षे मुख्यः सिद्धान्त इति युक्तम्। अतो वासुदेवान्न कोऽपि विशेष इतिचेत्तत्राह ॥ त्वयीश्वरे ब्रह्मणि नो विरुध्यते इति ॥ विरोधे ह्येकतरपरित्याग उचितः। सर्वभवनसमर्थे

---

अविरोधे ईश्वरत्वब्रह्मत्वलक्षणं हेतुद्वयमुक्तं तृतीये पादे। चतुर्थेऽपि द्वितीयकोट्युपस्थितिर्न प्रामाणिक्यतोऽपि न विरोध इति

ब्रह्मणि विरोधाभावान्नैवं कल्पनोचिता । किञ्च, न केवलं भगवान् ब्रह्मरूप एव,किन्त्वीश्वरोऽपि । ईश्वरत्वेन जगत्कर्तृत्वं ब्रह्मत्वेनाविकृतत्वं च द्वयमुपपद्यते । देशकालस्वरूपावस्थाभेदा अपि नापेक्ष्यन्ते । ईश्वरत्वाद् ब्रह्मत्वाच्च । आज्ञाशक्तिरीश्वरे अप्रतिहता,सर्वभवनसामर्थ्यं च ब्रह्मणि । तस्माद् विरोधाभावान्नैकतरपरित्याग उचितः । किञ्च प्रतीत्यनुरोधेन हि विरोधः । प्रतीतिस्त्वन्यथापि व्याख्यातुं शक्या । न हीयं प्रतीतिः प्रत्यक्षा, किन्तु शास्त्रीया । शब्दप्रयोगस्तु गौण्यापि सम्भवति । यथा सिंहो माणवक इति । तथा आधारभूतो भगवानेवेति निराश्रयस्य जगतोऽसम्भवादाधारत्वे सिद्धे तद्द्वारा कर्तृत्वमप्युपचर्यते । वस्तुतस्तु गुणा एककर्त्तारोऽत एव सांख्यादयः प्रकृतेरेव कर्तृत्वं वदन्ति । गुणानामप्ययमाश्रय इति कार्यकारणाधारभूतत्वादभिमानाभावेऽपि लोकदृष्ट्या कर्तृत्वकथनमुपपद्यते ॥ १९ ॥

एवं जगतोऽमायिकत्वं भगवतोऽकर्तृत्वं कर्तृत्वमुभयं चेति वासुदेवाद्वैलक्षण्येन प्रद्युम्नो निरूपितः । इदमाध्यात्मिकत्वेन उत्पत्तिस्थितिप्रलयात्मकत्वमुक्तम् । आधिदैविकत्वेन अनिरुद्धं तथाभूतमुपपादयति—

> सत्त्वं त्रिलोकस्थितये स्वमायया
> बिभर्षि शुक्लं खलु वर्णमात्मनः ॥

---

हेत्वन्तरमुक्तमिति, किञ्चेत्यादिना व्याख्यातम् । अन्यथा त्वविरोधः पूर्वेणोक्त एवेत्यग्रे तच्छङ्कयोपचारोक्तिः शशशृङ्गभिया पलायनमनुहरेत् । वस्तुतस्तु, ननु सांख्यादिषु गुणानामेव कर्तृत्वमुच्यते इत्यत आह ॥ त्वदाश्रयत्वादिति ॥ त्वमेवाश्रयो येषां तादृशत्वाद् गुणानां त्वन्निष्ठं कर्तृत्वं तेषूपचर्यत इत्यर्थोऽभिप्रेत इति ज्ञेयम् ॥

**सर्गाय रक्तं रजसोपबृंहितं**
**कृष्णं च वर्णं तमसा जनात्यये ॥ २० ॥**

सत्त्वमिति ॥ यथा पिता कृषीवलादिर्वा पुत्राऽन्नादेरुत्पादकः । यथा वा ब्रह्मादयो, वृष्टिद्वारेन्द्रादिस्ते गुणावतारा उच्यन्ते । तादृशस्त्वनिरुद्धः । तत्र ब्रह्मविष्णुशिवानामेव प्रत्येकगुणैरुत्पत्त्यादिनियामकत्वं न त्वनिरुद्धस्येत्याशङ्क्य तस्यैव त्रितयमाह ॥ त्रिलोकास्थितये स्वमायया शान्त्या सत्त्वं बिभर्षि । तस्य सत्त्वस्य स्वरूपमाह ॥ आत्मनः शुक्लं वर्णमिति॥ खल्विति प्रसिद्धिः । कृते शुक्लश्चतुर्बाहुरित्यादिवाक्यादुपाधिकालरूपाण्येवास्मिन् पक्षे भगवद्रूपाणि । तदर्थं गुणान् वदन् रूपाणि वदति ॥ सर्गाय रक्तरूपं बिभर्षीति सम्बन्धः ॥ तस्य रूपस्य सहजत्वाभावायाह ॥ रजसोपबृंहितमिति ॥ तथैव कृष्णं वर्णं जनानामत्यये नाशार्थं बिभर्षीति सम्बन्धः ॥ २० ॥

सङ्कर्षणात्मकमाह—

**त्वमस्य लोकस्य विभो रिरक्षिषु-**
**र्गृहेऽवतीर्णोऽसि ममाऽखिलेश्वर ॥**
**राजन्यसंज्ञाऽसुरकोटियूथपै-**
**र्निर्व्यूह्यमाना निहनिष्यसे चमूः ॥ २१ ॥**

त्वमस्येति ॥ अस्य लोकस्य रिरक्षिषुः रक्षितुमिच्छुः सन् मे गृहेऽवतीर्णोऽसि । अवश्यरक्षायां हेतुः ॥ अखिलेश्वरेति ॥ विभुरिति सामर्थ्यम् । इदं सङ्कर्षणकार्यं, देवान् प्रति तद्द्वेषिदैत्यवधादेव, न तु सर्वनाशकत्वेन । अतो देवांशो जगतो रक्षक एव दैत्यानामेव निवारकस्तदाह ॥ राजन्यसंज्ञेति ॥ राजन्या राजान इति संज्ञामात्रं, वस्तुतस्त्वसुरा एव । तेषां कोटयः

सेनारूपास्तासां यूथपा महान्तः । तैर्नितरां व्यूह्यमानाः परि-पाल्यमानाः प्रेर्यमाणा वा चमूर्निहनिष्यसे नितरां मारयिष्यसे । अतो रक्षार्थमेव दैत्यवधः । भगवत्सांनिध्यात् सर्वज्ञता तस्य । यस्मिन् विदिते सर्वमिदं विदितं भवतीत्यार्षज्ञानं वा ॥ २१ ॥

एवमपि ज्ञाते भयं निवृत्तमिति लौकिकस्य बलिष्ठत्वज्ञाप-नाय भयाद्भगवन्तं विज्ञापयति—

> अयं त्वसभ्यस्तव जन्म नो गृहे
> श्रुत्वाऽग्रजांस्ते न्यवधीत् सुरेश्वर ॥
> स तेऽवतारं पुरुषैः समर्पितं
> श्रुत्वाऽधुनैवाभिसरत्युदायुधः ॥ २२ ॥

अयं त्वसभ्य इति ॥ तुशब्दः पूर्वार्थे स्तुतिलक्षणं व्याव-र्त्तयति । भगवानवतीर्ण इति सतामेव सुखं भवति, न त्वसता-म् । अयं त्वसभ्यः, इममर्थमज्ञाप्यः । अत एव तव जन्म नो गृहे श्रुत्वा ते अग्रजान् मम षट्पुत्रान्न्यवधीत् । सुराणामीश्वरे-ति सम्बोधनं पक्षपातार्थम् । तर्हि किमधुना कर्त्तव्यमितिचेत् तत्राह ॥ स एव क्रूरात्मा कंसो रक्षकैः पुरुषैस्तेऽवतारं निवेदितं श्रुत्वा उदायुधः सन्नधुनैव निकट एवाभिसरत्यागच्छति । वर्त-मानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्रयोगः । ईश्वरे निवेदनमात्रं सेवककार्यम् । कर्त्तव्यं तु प्रभुरेव जानातीत्यस्य तूष्णीम्भावः । अभिप्रायस्तु यदीदानीं मारणीयस्तदा स्थातव्यं, नोचेदन्यत्र गन्तव्यमिति ॥ २२ ॥

इदानीं मारणे गुप्ततया गोकुलवासिभिः सह क्रीडोद्धारा-दिकं न भविष्यतीति तत् कृत्वा पश्चान्मारणम् । अतः पितु-रभिप्रायादन्यत्र गतवानिति लक्ष्यते । तूष्णीं स्थिते वसुदेवे

देवकी रूपोपसंहारं कंसस्य भगवज्जन्माज्ञानं च प्रार्थयितुं प्रथमतः स्तौतीत्याह—

श्रीशुक उवाच ॥

अथैनमात्मजं वीक्ष्य महापुरुषलक्षणम् ॥
देवकी तमुपाधावत् कंसाद्भीता सुविस्मिता ॥ २३ ॥

अथैनमिति ॥ स्वस्यैवायं पुत्र इति ज्ञातवती । तथा बुद्धेरुत्पादितत्वात् । परं स पुत्रश्चतुर्भुजादिलक्षणैर्लोकप्रसिद्धभगवत्तुल्योऽयमिति ज्ञात्वा स्वबुद्ध्या स्मृतिपुराणेषु प्रसिद्धं भगवत्स्वरूपं प्रकृतेऽनुवर्णनीयमिति तदर्थमाह॥महापुरुषस्य पुरुषोत्तमस्य लक्षणानि यत्र तं भगवन्तम् उपाधावत् ॥ शरणं गता । स्तुत्वैव शरणं गमिष्यति । भगवन्निमित्तमेव कंसाद्भीता । तर्हि भगवत्स्वरूपज्ञानाद् भयमेव कथं न निवर्त्तयतीत्याशङ्क्याह ॥ सुविस्मितेति ॥ आश्चर्यरस एव तस्या उत्पन्नो, न तु निर्द्धारितं ज्ञानं जातं येन भयं निवर्त्तेतेत्यर्थः ॥ शुचिस्मितेति पाठे भगवत्स्तोत्रज्ञानार्थं तस्याः पातिव्रत्यादिधर्मो निरूपितः ॥ अथेति भिन्नप्रक्रमे । नतु वेदादिप्रकारेण । अन्यथा पौनरुक्त्यं स्यात् ॥२३॥

शरणं गता देवकी अष्टभिः स्तोत्रमाह । आधिदैविकमाध्यात्मिकमाधिभौतिकमिति भगवतो रूपत्रयमादौ निरूप्य शरणागमने हेतुं चोक्त्वा प्रकृते रक्षां भगवत्स्वरूपाज्ञानं द्वयं प्रार्थयते । इदानीं मारणे युद्धार्थं प्रवृत्तावेव पूर्वज्ञानसदृशत्वात् प्राणा न स्थास्यन्ति । अतस्तेन प्रकारेण रक्षा न कर्त्तव्या । प्रका-

---

इदानीं मारण इत्यादि ॥ युद्धे भगवतैव तन्मारणसम्भवेऽपि पूर्वमुद्यतायुधेन बाला मारिता इत्यधुनाऽपि तादृशतद्दर्शनं पूर्वज्ञानसदृशम् । तथाच तन्मात्रेणैव तथेत्यर्थः ॥अन्यथेति॥ जन्माज्ञानाभावे प्राणास्थितिरेव स्यादित्यर्थः ॥ न सिद्ध्येदिति पाठे प्रथमः पक्षो रक्षा ॥

रान्तरेण रक्षां प्रार्थयन्त्यज्ञानमपि प्रार्थयते। अन्यथा प्रथमपक्ष एव न सिद्ध्येत्। रूपोपसंहारं च प्रार्थयते। सर्वाधिक्ये सर्वद्वेषसम्भवात्। सर्वमारणं चाशक्यम्। अलौकिके च शीघ्रमुपसंहारश्च स्यात्। अतः केवलं स्वार्थमुपसंहारप्रार्थनाद्वयं तु प्रकृतोपयोगि। एवं प्रार्थनात्रयं स्वस्य गर्वाभावार्थम्। इदं न जननरूपं, किन्तु नटवद्ऽनुकरणरूपमिति भगवदवतारं निरूपयति ॥ रूपत्रयं तथा हेतुः प्रार्थनात्रितयं तथा ॥ नटत्वमिति विज्ञानं स्वस्य यादृक् तथोदितम् ॥ आदौ भगवानाधिदैविक इति वदन्ती स्वाभिज्ञानप्रमाणप्रसिद्ध्या निरूपयति ॥ इदं रूपं तदेव यत् सर्वैराधिदैविकत्वेन उच्यते। द्वयमन्यल्लोकसिद्धमलौकिकं त्वाधिदैविकमेव। अन्यथा प्रमाणानामनुवादकत्वं स्यात्। अत इदं रूपं तदेव। किं तदित्याकाङ्क्षायामाह ॥ यत्तत् प्राहुरिति ॥ यत्तदोरानुपूर्व्येण निरूपणमाकाङ्क्षावैपरीत्येऽपि स्वानुभवदार्ढ्यार्थम्। नन्वाधिदैविकमेतद्भवितुं नार्हति वैलक्षण्यादित्याशङ्क्य वैलक्षण्यहेतुभूतान् धर्मानत्रैव साधयति, अव्यक्तमित्यादिनवभिः पदैः ॥ नवधा हि जगत्। तद्विलक्षणं ब्रह्म नवधा निरूप्यते॥ जगद्धर्माश्च तस्मिन् रूपे प्रतीयन्ते। तत्र, अव्यक्तादीनि भूतानीति वाक्याद् अव्यक्तं मूलरूपं, व्यक्तं तु जगत्। इदं तु व्यक्तमिति लोकप्रतीतिः। मूलभूतं त्वाद्यं भवति। इदं त्वाधुनिकम्। जगच्च स्वरूपकृतं कालकृतं च। वैलक्षण्यमुक्तं पदद्वयेन। देशकृतं वैलक्षण्यं वदन् परिमाणेन तदाऽऽह ॥ ब्रह्मेति ॥ बृहत्वाद् बृंहणत्वाच्च ब्रह्म मूलभूतम्। जगत्तु परिच्छिन्नमबृंहितं च तथैवरूपम्। एवं सदंशेन वैलक्षण्यत्रयं निरूपितम्। चिदंशेनापि त्रयमाह ॥ ज्योतिर्निर्गुणं निर्विकारमिति ॥ प्रकाशकं तच्चैतन्यं जगत् प्रकाशयति। अन्यथा जगदभिव्यक्तिर्न स्यात्। त्रिगुणात्मकं च जगत्। त्रिगुणातीतमेव हि

श्रीदेवक्युवाच ॥

रूपं यत्तत् प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् ॥
सत्तामात्रं निर्विशेषं निरीहं
स त्वं साक्षाद् विष्णुरध्यात्मदीपः ॥ २४ ॥

कारणं भवति । गुणानामपि कारणत्वे भगवत्कारणता न स्यात् । स्वातन्त्र्याभावात् । सदंशा एव गुणा न चिति संभवन्ति । यत्रैव भूतेन्द्रियान्तःकरणानि तदेव सगुणम् । तदेव कारणं भवति यत् प्रपञ्चविलक्षणम् । प्रपञ्चस्तूत्पत्त्यादिभावविकारयुक्तः । अतो निर्विकारमङ्गीकर्त्तव्यम् । लौकिकानि च ज्ञानानि विकारयुक्तानि रूपादिगुणयुक्तानि चेन्द्रियादिभिश्च प्रकाश्यन्ते। विषयकृतं वैलक्षण्यमानन्दांशे निराकरणीयमित्येतदर्थमाह ॥ सत्तामात्रमिति॥ सत्ता विद्यमानता कालत्रयाबाधितसत्ता वा । सर्वमेव हि जगत् सद्रूपमपि विशेषनामरूपधर्मवद्भवति । यावद्विशेषनिर्मुक्तं सामान्यं न भविष्यतीत्याशङ्क्य लौकिक एव विषये इयं व्याप्तिः । न त्वलौकिक इति सत्तामात्रमपि निर्विशेषमित्याह । अन्यथा पौनरुक्त्यं स्यात् । विशेषा हि व्यावर्त्तकाः । मूलसत्तायां व्यावर्त्याभावात् किं विशेषेण । कार्ये तु सा सर्वत्राऽनुस्यूतेति कार्यं न व्यावर्त्तनीयम् । अन्यथा तस्य कारणतैव नस्यात् घटपटयोरिव । पूर्णमदः पूर्णमिदमित्यादिश्रुतौ सर्वचेष्टारहितमेव कारणं भवति । कार्यं सर्वमेव चेष्टमानम् । आकाशाऽऽदेरपि शब्दजननलक्षणा चेष्टा वर्त्तत एव । आवरणाऽपगमे कार्यापगमवदाकाशापगमस्यापि दृष्टत्वादन्धकारवदीहा तत्रापि । ब्रह्मणि तु आवरकासम्भवादव्यवहार्यत्वाच्च निरीहत्वं सिद्धमेव यद्यप्येकस्मिन्नपि विशेषणे सर्वे धर्माः क्रोडीकर्त्तुं शक्यन्ते ।

तथापि नवधा वैलक्षण्यस्य वक्तव्यत्वान्नवविशेषणान्युक्तानि । तादृशमिदमेव रूपम् । नवविधानां प्राणिनां स्वदोषेणैव नवविधत्वप्रतीतिः । यथा भ्रमरिकादृष्ट्या गृहीता भूमिरपि भ्रान्तेव दृश्यते । तदपि तस्यैव दृष्ट्या । एवमत्रापि ब्रह्मविदां दृष्ट्या भगवान् वर्णितगुण एव । अन्यथा तदभिव्यक्त्यर्थं प्रयत्नं न कुर्युः ब्रह्मादयोऽपि पश्चादुत्पन्नं न नमस्कुर्युः, सायुज्यं चाऽत्र नप्राप्नुयुरेतज्ज्ञानेन च सर्वज्ञा न भवेयुरेतन्निष्ठाश्च निर्गुणा न भवेयुरेतद्भजनेन च सर्वविकाररहिता न भवेयुः, सर्वेषु पदार्थेष्वेतं च न पश्येयुरेतज्ज्ञानेन च प्रपञ्चो न निवर्त्तेत । एतत्कृपया च ब्रह्मनिष्ठा न भवेयुः । अतोऽयमेतादृश एव । नन्वेतत् सर्वं सर्वज्ञान्युपास्यत्वे भगवतः सम्भवति । न त्विदानीमेवाऽऽविर्भूतस्य तथात्वं वक्तुं शक्यत इत्याशङ्क्याह ॥ स त्वमिति ॥ यदेतादृशं तत् त्वमेव । तत्र हेतुः ॥ विष्णुरिति॥ विष्णुर्हि पूर्वोक्तप्रकारेण सर्वोपास्यः । स एव सर्वेषामधिदेवः। स एवाविर्भूत इति ब्रह्मवाक्यादवसीयते । नन्वेवमप्यंशावतारः स्यात्, ततश्च मूलत्वाभावादुक्तं सर्वं बाधितमित्यत आह ॥ साक्षादिति ॥

ननु वाक्यं गौणमपि भवति, स्तुतिपरमपि भवति । तस्मात् कथं निर्णयः ? इतिचेत् तत्राह ॥ अध्यात्मदीप इति ॥ अध्यात्मं मदन्तःकरणं वस्तुतो जडं मुग्धं सर्वशास्त्रविहीनम्। तच्चेदेवंप्रकाशयुक्तं त्वत्सान्निध्यात् तदेवास्य कारणमित्यवसीयते।आधिदैविकस्यैवाध्यात्मप्रकाशजनकत्वात् । अतो मदनुभवेनापि भवानुक्तरूप एव । कार्यं चाव्यभिचारिलिङ्गम् ॥ २४ ॥

एवमाधिदैविकरूपं निरूप्याध्यात्मिकं रूपं निरूपयति—

नष्टे लोके द्विपरार्द्धावसाने
महाभूतेष्वादिभूतं गतेषु ॥

व्यक्तेऽव्यक्तं कालवेगेन याते
भवानेकः शिष्यतेऽशेषसंज्ञः ॥ २५ ॥

नष्टे लोक इति ॥ आधिभौतिकस्य सर्वस्याध्यात्मन्येव लयः । तस्यैवात्मत्वप्रतिपादनात् । दृश्यते च स्वप्नादौ बाह्यप्रकाशेऽपि आन्तरः प्रकाशः।तस्मादयं भगवानात्मा । अन्यस्य लयाऽवधित्वं नास्तीति तस्य लयाऽवधित्वमाह ॥ लोके प्रकाशे, चतुर्दशलोकेषु च नष्टेषु सर्वनाशो नियतकाल इति ज्ञापयितुमाह ॥ द्विपरार्द्धावसान इति ॥ ब्रह्मण आयुः परशब्देनोच्यते । तस्यार्द्धं परार्द्धम् । परार्द्धद्वये ब्रह्मसमाप्तिः । बन्धमोक्षव्यवस्थां लोके वक्तुं ब्रह्मण आयुषोऽर्द्धव्यवहारो ब्रह्मण उत्तरायुष्येव ब्रह्माण्डस्थानां मुक्तिरिति ज्ञापनार्थः । द्विपरार्द्धस्याऽप्यवसाने समाप्तौ ब्रह्माण्डस्य तु प्रलयस्तदैव भवति । तदा तत्त्वानि तिष्ठन्ति । तेषामपि प्रलयमाह ॥ महाभूतेष्वादिभूतं गतेष्विति ॥ आदिभूतशब्देनाहङ्कार उच्यते । अग्रे महत्तत्त्वस्याऽपि प्रकृतौ लयस्य वक्ष्यमाणत्वात् । अहङ्कारोऽपि महति लीयत इति ज्ञापितम् । भूतानामादिभूत इति व्युत्पत्त्या आदिभूतशब्दवाच्योऽहङ्कारो भवति । आदौ भूतो जातश्चेद् महत्तत्त्वमेव । व्यक्ते महत्तत्त्वे प्रकृतिं गते सति व्यक्ताव्यक्तपदाभ्यामेतत् सूचयति । अक्षरात् प्रकृतिपुरुषविभागपक्षे प्रकृतिपुरुषयोरप्यक्षरे लयः । कालादीनामव्यक्ततैव । किं बहुना सर्वमेव व्यक्तमव्यक्ते प्रविष्टम् । तत्र प्रवेशे कालवेग एव हेतुः । भगवतः सर्वोपसंहारेच्छायां सर्वोपसंहारार्थमधिकारी कालो वेगवत्तरो भवति । एवं स्वयमप्यक्षरे । अक्षरं पुरुषोत्तमे पुरुषोत्तमाभिन्ने वा अक्षरे । तदा भवानेव एकः शिष्यते । तस्य भगवतः स्वरूपाणि यानि स्थितान्याधिदैविका-

---

पुरुषोत्तमाभिन्न इति ॥ पुरुषोत्तमचरणात्मक इत्यर्थः ॥

नि तेषामपि लयमाशङ्क्य तन्निवृत्त्यर्थमाह ॥ अशेषसंज्ञ इति ॥ अशेषाः सर्वाः संज्ञा यस्य । सर्वशब्दवाच्यो भगवानेक एवेति एक एव शिष्यत इत्यर्थः ॥ २५ ॥

एवमाधिभौतिकानां सर्वेषां लयस्थानभूतोऽध्यात्मा उक्तः। आधिभौतिकं रूपमाह—

**योऽयं कालस्तस्य तेऽव्यक्तबन्धो**
**चेष्टामाहुश्चेष्टते येन विश्वम् ॥**
**निमेषादिर्वत्सरान्तो महीयाँ-**
**स्तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २६ ॥**

योऽयं काल इति ॥ आधिभौतिकानामाधिभौतिकभूतो भगवान्,न त्वाधिभौतिक एव । तथात्वज्ञापकं,कालो यस्य चेष्टा इति । कालप्रेरितानि सर्वाण्येवाधिभौतिकानि । कालः सर्वेषां निमित्तभूतः । तस्य सर्वेषां मूलभूतस्य स एव भवानिति ते तव चेष्टामाहुः।ननु भगवतश्चेष्टासत्त्वे किं प्रमाणं,चेष्टाया वा कालत्वे तत्र, आहुरिति चेष्टायाः कालत्वे मानमुक्तम् । चेष्टासत्त्वे मानमाह ॥ चेष्टते येन विश्वमिति ॥ येन कालेन विश्वमेव चेष्टते। न हि कारणस्य चेष्टाभावे कार्ये चेष्टा भवति । कालवशाच्च चेष्टा चेष्टायाः कर्मरूपत्वात् । कर्म च कालजनितम् । काले कर्मविधानात् । अतो भगवच्चेष्टारूपः कालः । ननु प्रकृतिकारणपक्षे तद्द्वारा कार्यपक्षे वा न चेष्टारूपः कालः सिद्ध्येदित्याशङ्क्याह ॥ अव्यक्तबन्धो इति ॥ अव्यक्तस्य प्रकृतेर्बन्धुः सर्वकार्यकर्त्ता । अतः प्राकृतकार्यपक्षेऽपि चेष्टारूपः कालः। आधिदैविककालस्य भगवद्रूपत्वात् तद्व्यावृत्त्यर्थमाह ॥ निमेषादिर्वत्सरान्त इति ॥ यद्यपि परमाणुकाल आदिभूतस्तथापि परमाण्वादिलवान्तानामतिसूक्ष्मत्वाद्व्यवहारानौपयिकत्वमाशङ्क्य निमेषादिरेव

गृहीतः। द्विपरार्द्धावसानत्वाच्चेष्टारूपकालस्य संवत्सरो मध्यम इति ततोऽप्याह ॥ महीयानिति॥ एवं यस्य चेष्टा कालो,यश्चावशिष्यते, यश्चाधिदैविकः सर्वकारणकारणभूतस्तं त्वां प्रपद्ये शरणं गच्छामि। अनेन बालकः पुत्रः कथं शरणार्ह इति निरस्तम् । तं त्वामित्यत्र प्रमाणं पूर्वमुक्तमेव— आहुरिति, अध्यात्मदीप इति च, विष्णुरिति च । एवं सर्वरूपोऽपि यदि रक्षादिकं नाविष्कुर्यात्तदा शरणगतिरप्रयोजिकेति तद्व्यावृत्त्यर्थमाह ॥ ईशानमिति ॥ यत्र भगवत एतावन्तो धर्माः स ईदृश एव भवति । ऐश्वर्यं विलम्बं न सहते, न चोपेक्षते। नन्वीश्वरो दैत्यपक्षपातीचेत्तदापि कार्यं न सिद्ध्यतीति, तदर्थमाह॥ क्षेमधामेति ॥ क्षेमाख्यं शुद्धसत्त्वं धाम यस्य । अतः शिष्टानामेव पक्षपातं करिष्यति इति न काचिच्चिन्ता । आधारभूरूपधर्मस्यैव प्राधान्यख्यापनार्थं लिङ्गव्यत्ययः ॥ २६ ॥

एवं भगवतो रूपत्रयं, प्रपत्तिं च निरूप्य तस्याः प्रपत्तेः प्रकृतोपयोगित्वाय हेतुं निरूपयति—

> मर्त्यो मृत्युव्यालभीतः पलायन्
> सर्वाँल्लोकान् निर्भयं नाध्यगच्छत् ॥
> त्वत्पादाब्जं प्राप्य यदृच्छयाद्य
> स्वस्थः शेते मृत्युरस्मादपैति ॥ २७ ॥

मर्त्य इति ॥ अतीन्द्रियः कालः। लोके स्वज्ञापनार्थं स्वप्रतिकृतिं सर्पमुत्पादितवान्। लौकिकास्त्वलौकिकं तद्द्वारैव प्रतिपद्यन्ते । यथा सिंहप्रतिकृतिर्ग्रामसिंहः । एवं बिडालगवादयश्च व्याघ्रगवयादीनां प्रतिकृतिरूपाः । कालः स्वभक्ष्यमेव सृजति । अतः कालसृष्टा मर्त्या इत्युच्यन्ते । तस्य च भार्या कुण्डलिनी शक्तिः स्वभर्तृज्ञापिका सर्वेषु पुरुषदेहेषु तिष्ठति । योगो हि त-

दुद्बोधकः। तच्छरणं गत एव योगी, तदा तया प्रार्थितः कालः शीघ्रं न भक्षयति । तस्य च अध्यात्मा वेदः । तदुक्तकर्मणाऽपि विलम्बो भवति । अन्ये च सर्वे देवाः पुराणोक्तास्तस्याऽऽधिभौतिकरूपाणि। तेऽपि विलम्बहेतवो भवन्ति। इमे त्रिविधा अपि धर्ममार्गवर्त्तिनो निरन्तरमेकनिष्ठास्तत्प्रवणाः। ये पुनर्लौकिकाः साधारणाः शीघ्रं भक्षणार्थमेव स्थापिता ओदनभूताः, ते चेत् कालातिक्रमार्थं यतन्ते तदा कालकार्यं स्वस्मिन् रोगादिकमनुभूय कालनिवर्त्तकत्वेन श्रुतान् बहूनेव धर्मान् कर्त्तुं यतन्ते । तद्व्यालभीतस्य पलायनं मूषकस्येवाग्रे पतितस्य । मृत्युः कालस्य मुखम् । सोऽपि व्यालः । भयहेतुवाचको व्यालशब्दो मुखहेतुक एव । यत्र क्वापि गच्छन् क्षुत्पिपासे जरावलीपलिताद्युच्चनीचधर्माननुभवति । अतः कालकार्यदर्शनाद्भयं न निवर्त्तते । देवत्वमानुषत्वे वृक्षत्वे वा बहुकालस्थितधर्मेषु भयं निवर्त्तेत इत्याशङ्क्य, लोकान् सर्वानित्युक्तम्। निर्भयं भयाभावम्। अतः केनाप्युपायेन मृत्युर्न निवर्त्तेत इति निर्भयं नाध्यगच्छद् भयनिवर्त्तकस्थानं वा । शास्त्राऽनुभवयोः संवादे हि तन्निवर्त्तते । येऽपि पूर्वमुक्तास्त्रिविधास्ते कालाधीना इत्यवश्यभक्षकत्वे न समर्था भवन्ति । प्रार्थना हि दुर्बला । एवं शरणान्वेषणाऽर्थं परिभ्रमणे क्रियमाणे सर्वत्र प्रवर्त्तको भगवान् कदाचित् परितुष्यति । तदा भगवच्चरणप्राप्तिः । सत्सङ्गो भागवतं चेति भगवच्चरणद्वयमाधिभौतिकं, ज्ञानं भक्तिश्चाध्यात्मिकं, चरणावेव प्रसन्नस्याधिदैविकौ। तन्मध्ये अन्यतरप्राप्तावपि कृतार्थतेति ज्ञापयितुं, त्वत्पादाब्जमित्युक्तम् ॥ भगवत्सहितं भगवच्चरणारविन्दं प्राप्य यदृच्छया भगवदिच्छया । कालसंबन्धाभावाय यदृच्छयेत्युक्तम् । नियतकालस्य यदृच्छात्वाभावात् । अब्जपदेन च

अलौकिको लोक एव ज्ञापकः शोभातिशयो निरूपितः। त्रितयाऽपेक्षयाप्यतिशयः। अनेनैव विश्वासेन अद्यैव यदैव चरणप्राप्तिस्तदैव स्वस्थः शेते मृत्युनिवारणार्थं यत्नं च न करोति। मृत्युः पुनः स्वत एव निवर्त्तते । भगवच्चरणारविन्दमत्र वर्त्तत इति अस्मादसाध्यादपगमनं युक्तमेव। शास्त्रं तु प्रमाणम्। संवादस्तु अलौकिकभावसिद्धिः । कालनियन्ता च भगवान्। अतोऽनुभवप्रमाणयुक्तयोऽत्रैव सन्तीति न पूर्ववदस्मिन् मार्गे शङ्का । निष्कपटतया प्रवृत्तौ तु नात्र व्यभिचारः॥ २७॥

एवं शरणागतौ हेतुमुपपाद्य त्रयं प्रार्थयति—

स त्वं घोरादुग्रसेनात्मजान्न-<br>
स्त्राहि त्रस्तान् भृत्यवित्रासहासि॥<br>
रूपं चेदं पौरुषं ध्यानधिष्ण्यं<br>
मा प्रत्यक्षं मांसदृशां कृषीष्ठाः॥ २८॥

स त्वमित्यादि त्रिभिः॥ अत्रावसरे त्रयं संभवति। भगवान् इदानीमेवान्तर्हितो भवेत् । पश्चात् स्वेच्छयाऽन्यत्र स्थितः कंसं मारयेत्। तादिमां कथां कंसः श्रुत्वा मारयेदस्माञ्ज्ञानदापनयोर्नियोगात्। अतो रक्षा प्रार्थनीया। इदानीं वा कंसं मारयेत् ततः कंसपक्षपातिनः पश्चादस्मान् मारयेयुः । तदर्थमिदं रूपं लौकिके नख्यापनीयमितिप्रार्थनीयम्। एवंरूपेणात्रैव च स्थितिरपि संभवति। तदा अलौकिकं दृष्ट्वा प्राकृतो लोको द्वेषं कुर्याद्, अस्मदादयश्च शीघ्रं मुच्येरन्, भक्तिरसानुभवश्च न स्याद् मर्यादा च भज्येतेति। अतो रूपाप्रदर्शनप्रार्थना युक्तैव। एतत्सर्वदोषपरिहारार्थं सांप्रतं कंसस्याज्ञानं भवत्विति प्रार्थना। इदानीं मारणे वा युद्धसमये स्वजीवनार्थम्। अनुपसंहारे पूर्वोक्तपक्ष-

इदानीं मारणे वेत्यादि ॥ रक्षाप्रार्थनेति शेषः । अस्मिन् पक्षे

संभवादुपसंहारोऽपि प्रार्थ्यः । भगिनीपतिश्चेति कदाचिन्न मारयेदित्याशङ्काव्युदासार्थमाह ॥ घोरादिति ॥ प्रार्थनीयसर्वदानसामर्थ्यार्थं,स त्वमिति ॥ स पूर्वोक्तधर्म एव त्वम् ॥ घोरो निर्दयो भयानकः क्रूर इति यावत् । उपायेन विषादिना अमारणार्थम्, उग्रसेनात्मजादित्युक्तम् ॥ उग्रसेनस्य शरीरजः कथं वध्यो भवेत् । घोरत्वात् स मारयेदेव ॥ त्रस्तानिति, पूर्वपुत्रमारणेन ॥ त्राहि पालय । उभयपदी धातुरयं प्रचुरप्रयोगान्निश्चीयते । ननु पर्यवसाने बाधाभावादिदानीं मारणपक्षे किमिति रक्षा प्रार्थ्यत इतिचेत् तत्राह ॥ भृत्यवित्रासहासीति ॥ भृत्यानामस्मदादीनां वित्रासं भयं हन्तीति तथा । असीति तव संकल्पः । यथा गन्धः पृथिव्या एव । एवं भगवतो भक्तदुःखनिवर्त्तकत्वमेव । यथाऽस्मद्रक्षा इदानीममारणेन अन्यत्र गमने च कर्त्तव्या तथा स्थितौ रूपोपसंहारश्च कर्त्तव्य इत्याह ॥ रूपं चेदमिति ॥ सर्वदा अनेन रूपेण स्थातुमयुक्तमिति ॥ इदं रूपं मांसदृशां चर्मचक्षुषां मा कृषीष्ठाः । तर्हि कस्यापि मुक्तिर्न स्यादित्याशङ्क्याह ॥ ध्यानधिष्ण्यमिति ॥ ध्यानमेव धिष्ण्यं स्थानं यस्य । ध्यान एव प्रकाशो भवतु, न बहिः । अतः सर्वं सुस्थं भविष्यतीति भावः । मा कृषीष्ठा इत्यनेन चैतज्ज्ञापितम् । अयं स्वेच्छयैव प्रकटीकरोति । वस्तुतस्तु इन्द्रियावेद्यमेव । मांसदृशामित्यनेन दैत्या एते मांसभक्षका मांसमेव पश्यन्ति सर्वत्र, न तु विहितं निषिद्धं वा विचारयन्तीत्युक्तम् । चकारस्तु क्रमसमुच्चयार्थः ॥ २८ ॥

अन्यतरकरणाभावाय मध्यमपक्षे स्वतो निवृत्तावपि कंसश्चे-

---

रूपानुपसंहारातिरिक्तबाधकाभावात्तत् कृत्वान्यत्र स्थेयमिति भावः। एतदेवोक्तम्, अनुपसंहार इत्यादिना ॥ ॥ * ॥ ॥ अन्यतरेति॥ इदानीमेव मारणं लोके चैतद्रूपदर्शनमित्येतयोरन्यतरस्य तथात्वायेत्यर्थः

ज्जानीयात् स्वयमागत्य युद्धं कुर्यात् । अत एव स दोषस्तदवस्थ इति । तस्य जन्माज्ञानं प्रार्थयति—

जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन ॥
समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥ २९ ॥

जन्म त इति ॥ असौ कंसस्ते जन्म मा विद्यात् । यतोऽयं पापः । तर्हि मत्स्वरूपं न जानासीतिचेत्तत्राह ॥ मधुसूदन इति ॥ यद्यप्येतज्जानीमस्तथापि मध्यमपक्षशङ्कया प्रार्थ्यते । ननु मध्यमपक्षे को दोषः । अविश्वासस्तु न कर्त्तव्य इतिचेत्तत्राह ॥ भवद्धेतोः कंसादहं सम्यगुद्विजे ॥ विश्वासः कर्त्तव्य इति चेत् तत्राह ॥ अधीरधीरिति ॥ न हि भगवति उत्पन्ने परमानन्दे कोऽपि क्लेशहेतुर्भवितुमुचितः । भवद्धेतोरित्यनेनैतज्ज्ञापयति ॥२९॥

यद्ययं जानीयादस्मादुत्पन्नो भगवानन्यत्र तिष्ठतीति तदा निर्बन्धेन समानयनं वा प्रार्थयेत् पूर्वं प्रतिज्ञातत्वात् । अतोऽस्य ज्ञानाभाव एवोचितः । रूपान्तरस्वीकारे त्वन्यत्राऽपि स्थापयितुं शक्यते, नत्वनेन रूपेणेत्युपसंहारं प्रार्थयति—

उपसंहर विश्वात्मन्नदो रूपमलौकिकम् ॥
शङ्खचक्रगदापद्मश्रिया जुष्टं चतुर्भुजम् ॥ ३० ॥

उपसंहरेति ॥ अदो वेदवेद्यमलौकिकं रूपं लोके उचितं न भवतीत्युपसंहर ॥ विश्वात्मन्निति रूपग्रहणे उपसंहारे च सामर्थ्यं द्योतितम् । स हि विश्वास्मिन् सर्वाण्येव रूपाणि गृह्णाति

---

इदानीं मारणमन्यत्र गमनं च मध्यमः पक्षः । एवं सत्यपि यदि तममारयित्वैवान्यत्र गतिर्भवति तदा स्वतस्तन्मारणान्निवृत्तिर्भवतीति तथापि दोषानिवृत्तिरित्याहुः,मध्यमपक्षे स्वतइत्यादिना॥ तेन जन्माऽज्ञानस्यावश्यकत्वमुक्तं भवति ॥

उपसंहरति च। अद इति पदेन च एतज्ज्ञापयति । अवतारो नोपसंहर्त्तव्यः । अलौकिकत्वमात्रमुपसंहर्तव्यमिति । सर्वमेवाऽलौकिकमिति सर्वस्यैवोपसंहारे प्राप्ते यल्लौकिकसमानं तत् स्थापनीयमन्यदुपसंहर्त्तव्यमिति वदन्नलौकिकमंशमाह ॥ शङ्खचक्रेति ॥ शङ्खचक्रगदापद्मान्यायुधान्युपसंहर्त्तव्यानि । अलौकिकी श्रीश्च उपसंहर्त्तव्या, भुजानां चतुष्टयं चोपसंहर्त्तव्यम्। द्वयं स्थापनीयम् । उपलक्षणमेतत् । प्राकृतभावाद्यदतिरिक्तं तदुपसंहर्त्तव्यम्। अविद्यमानोऽपि प्राकृतो भावः स्थापनीयः । यद्यपि चतुर्भुजं रूपं देवादीन् प्रति प्राकृतमेव, तथापि साधारणान् प्रति तादृशमपि न प्रकटनीयमिति प्रार्थना ॥ ३० ॥

एवं स्तुत्वा प्रार्थयित्वा च विरोधं परिहरति—

विश्वं यदेतत् स्वतनौ निशान्ते
यथावकाशं पुरुषः परो भवान् ॥
बिभर्षि सोऽयं मम गर्भगोऽभूद्
अहो नृलोकस्य विडम्बनं महत् ॥ ३१ ॥

विश्वमिति॥ अथवा अर्द्धोपसंहारेणार्द्धस्थापने सामर्थ्यार्थं विरोधिगुणमनूद्य अन्यतरस्य प्रदर्शनपरत्वेनोपपादयन्ती समर्थ-

---

यद्यपीति ॥ केचिद्देवा अपि चतुर्भुजा भवन्तीति तादृशे रू[illegible] देवानां नालौकिकत्वेन भानम्। इतरेषां तु भवतीति तथा ॥ तादृश[illegible] मपीति ॥ उपसंहृतालौकिकप्रभं चतुर्भुजाकारमात्रमपीत्यर्थः ॥ रू[illegible] चेदमित्यनेन कंसादीनामदर्शनं प्रार्थितम्। अत एव, मांसदृशामित्यु[illegible] क्तम्। अनेन तु तद्दर्शनेऽपि मनुष्यमात्रस्य तथा दर्शनं नास्मद्धित[illegible] मिति तदभावः प्रार्थितोऽतो नान्यतरवैयर्थ्यं शङ्कनीयम् । किञ्च[illegible] यद्यप्याद्येनैव द्वितीयचारितार्थ्यं भवति, तथापि रूपपदमात्रं ध्यान[illegible] धिष्ण्यपदं च श्रुत्वा सर्वांशेन तिरोधानं हरिर्मा करोत्विति विशेष[illegible] प्रार्थनं द्वितीयं कृतमिति ज्ञेयम् ॥

यते ॥ विश्वमिति ॥ स्वतनौ स्वशरीरे विराजि ब्रह्माण्डाख्ये निशान्ते सृष्टिसमये यथावकाशं चतुर्दशभुवनलोकात्मकं बिभर्षि । प्रलये सूक्ष्मतया निवेशनं भवतीति निशान्त इत्युक्तम् । किर्मीरतया स्थितिर्निषिद्धा । नन्वत्र किं प्रमाणमित्याशङ्क्याह ॥ पुरुषः पर इति ॥ पुरुषो व्यष्टिः । परः समष्टिः । भवानिति सम्मत्यर्थम् । तेन स्वस्य एतादृङ्माहात्म्यज्ञानवत्त्वसंबोधनम् । एवं विश्वाधारभूतोऽपि भवान् मम गर्भगोऽभूत् । यद्यपि विरुद्धसर्वधर्माश्रयस्य भगवतो नेदमाश्चर्यं, तथापि स्वप्रतीत्या आश्चर्यं मत्वा परिहरति ॥ अहो नृलोकस्य विडम्बनं महदिति ॥ अहो इत्याश्चर्ये ॥ नृलोकस्य मनुष्यमात्रस्य महदेतदनुकरणमिति समाधानम् । महानपि अल्पमनुकरोति । यथा पुरुषो बिडालं, तथापि ब्रह्माण्डविग्रहस्य परमसूक्ष्मता आश्चर्यरूपेत्याशङ्क्याह ॥ महदिति ॥ अनुकरणं महदिति । अनुकरणं सत्यमेव, परमलौकिकमनुकरणम् । अनेन गर्वाभावोऽप्युक्तः ॥ ३१ ॥

एवमुभयोः स्तोत्रे सप्रार्थने कृते भगवान् स्वस्य पुत्रत्वे, तादृशरूपेण प्राकट्ये च हेतुं वदंस्तयोः पूर्ववृत्तान्तमाह परिज्ञानार्थम्—

श्रीभगवानुवाच ॥

त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति ॥
तदाऽयं सुतपा नाम प्रजापतिरकल्मषः ॥ ३२ ॥

त्वमेवेति, चतुर्दशभिः ॥ चतुर्दशविद्यानां प्रामाण्यार्थम् । पूर्वस्थितिस्तथा कार्यं प्रकारो भजनं हरेः ॥ कालस्तोषश्च

---

भगवदुक्तवाक्यसंख्यातात्पर्यमाहुः ॥ चतुर्दशेति ॥ पूर्वब्रह्मणो देवकीपुत्रत्वं न प्रमाणसिद्धमिति भ्रमाभावाय सर्वा अपि विद्या अत्र प्रमाणानीति ज्ञापनाय तत्समानसंख्यैर्वाक्यैर्भगवतोक्तमित्यर्थः । प्र-

प्राकट्यं वरप्रार्थनया सह ॥ अल्पबुद्धित्वभोगौ च जन्मत्रितयमेव च * त्रिगुणं भगवत्सत्यं लौकिकाद्वैदिकान्महत् * रूपदर्शनकार्यं च साधनं प्रोच्यते महत् ॥ प्रथमं स्थितिमाह ॥ पूर्वसर्गे प्रथमब्रह्माण्डे प्रथमकल्पे इतः पूर्वकल्पे वा । साक्षाद्देवकीं प्रत्येवाह भगवान् । तस्या दीनत्वेन स्नेहातिशयात् ॥ पृश्निरिति नाम । त्वमेव पृश्निरभूः स्वायम्भुवे मन्वन्तरे ॥ सतीति सम्बोधनम् ॥ अनेनास्या अधिककृपायां धर्मातिशयो हेतुरुक्तः। तदा तस्मिन्नेव समये अयमपि सुतपा इति नाम प्रसिद्धः । अयं च प्रजापतिर्ब्रह्मणः सुतो मरीच्यादिवत् कर्दमवत् स्वभावत एवायमकल्मषः कामक्रोधलोभादिरहितः ॥ ३२ ॥

एतादृशौ पूर्वं स्थितौ । तादृशौ प्रति ब्रह्मण आज्ञामाह—

---

माणस्य भावः प्रामाण्यं प्रमाणत्वमिति यावत् । तदर्थमित्यर्थः । नच संख्यायामपि तात्पर्यवत्त्वे प्रमाणाभाव इति वाच्यम् । श्रुतिसिद्धत्वात् । तथा हि । वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद् द्वादशकपालो जगत्यैवास्मिन् पशून् दधातीतिश्रुतौ कपालेषु द्वादशसंख्याविधानतात्पर्यं तदवयवभूतसंख्याफलोक्त्या निरूपितम् । तत्तत्संख्यायास्तत्तत्फलसाधकत्वोक्तेरपि तत्तत्फलसंख्यासजातीयत्वमेव प्रयोजकमिति ज्ञेयम् । अष्टाक्षरा गायत्री तेजस्त्रिवृत्, दशाक्षरा विराडन्नं विराट्, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगती, जागताः पशव इतिश्रुतिभ्यः । ननु सकृत्पुत्रत्वेऽपि वरवाक्यसत्यत्वे वारत्रयं तथात्वं कुत इत्यत आहुः ॥ त्रिगुणमित्यादि ॥ लौकिकमेकगुणं, द्विगुणं वैदिकं, भगवदीयं त्रिगुणमतः सर्वाधिकमिहोक्तमिहैव फलतिचेत्तदा सत्यं भवति । वैदिकं तु जन्मान्तरेऽपि फलतीति तथा । भगवदुक्तं त्वामोक्षं यावन्ति जन्मानि तेषु सर्वेष्वेव फलतीत्येतदेवैकगुणत्वादिकं तेषु ॥

**युवां वै ब्रह्मणादिष्टौ प्रजासर्गे यदा ततः ॥**
**सन्नियम्येन्द्रियग्रामं तेपाथे परमं तपः ॥ ३३ ॥**

युवामिति ॥ प्रजासर्गे ब्रह्मणा आदिष्टौ तदा ततस्तदनन्तरमेव क्वचिद्देशविशेषे सन्नियम्येन्द्रियग्रामं ततः प्रभृति सम्बन्धमकृत्वा परमं तपस्तेपाथे, सर्वेन्द्रियनिरोधेन सर्वाहारपरिवर्जनेन वाय्वादिनिरोधे विहिते शरीरे सन्तापजननात्तपो भवति । परममुत्कृष्टं भगवद्विषयकत्वात् ॥ ३३ ॥

एवं तस्मिञ्जन्मनि कार्यमुक्तम् । तस्य तपसः प्रकारमाह—

**वर्षवातातपहिमघर्मकालगुणाननु ॥**
**सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥ ३४ ॥**

वर्षवातेति ॥ वर्षवातयोः सहनं प्रावृट्काले अनावृतदेशे अन्तरिक्षे स्थित्वा, आतपसहनं पञ्चाग्निप्रकारेण, हिमसहनं जलवासादिना । घर्मः कालान्तरीयोऽपि । कालगुणा अन्येऽपि शीतादयः साधारणाः । तेषामप्रतीकारेण स्थितिरेव सहनम् । उभावपि सहमानौ ॥ ३४ ॥

नन्वेकस्तपःकरोत्यपरस्तत्सेवामिति, तादृशयोर्भगवत्सेवामाह—

**शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ॥**
**मत्तः कामानभीप्सन्तौ मदाराधनमीहतुः ॥ ३५ ॥**

शीर्णेति ॥ कियत्कालतपसा चित्ते शुद्धे भगवत्सेवैव कार्या, नान्यथेति ज्ञात्वा तपः कुर्वाणावेव परिचर्यां कृतवन्तौ सर्वथा आहाराभावे बहिस्संवेदनाभावे च उभयोः परिचर्या न भवतीति यादृशेन तपसा परिचर्यां कृतवन्तौ स विशेष उच्यते ॥ शीर्णानि पर्णानि, अनिलो वायुश्च आहारो ययोः । परमोपशान्तिः शुद्धसात्त्विकगुणाविर्भावः । स एवोपशमः । सोऽपि

चित्तस्य स्वभावत एव चेज्जातस्तदोपशान्तं चित्तं भवति । एवं यमा नियमाश्चोक्ताः । मत्तो हरेरेव । कामान् पुत्रादीन् अभीप्सन्तौ सकामौ मदाराधनं मत्परिचर्यामीहतुः कृतवन्तौ ॥ ३५॥

एवं तिष्ठतोर्यावान् कालो जातस्तमाह—

**एवं वां तप्यतोर्भद्रे तपः परमदुष्करम् ॥**
**दिव्यवर्षसहस्राणि द्वादशेयुर्मदात्मनोः ॥ ३६ ॥**

एवमिति ॥ भद्रे इति संबोधनं, स्त्रीपुंभावेन स्थितयोः सौभाग्यबोधनार्थम् । उत्तरोत्तरतपोवृद्धौ परमदुष्करता द्वादशदिव्यवर्षसहस्राणि चतुर्युगम् । युगधर्मा अपि तयोर्बाधका न जाता इति ज्ञापनार्थं, तावत्कालं देहास्थितौ हेतुः– मदात्मनोरिति ॥ अहमेवात्मनि ययोः ॥ ३६ ॥

एवं कृते अहं प्रसन्नो जात इत्याह—

**तदा वां परितुष्टोऽहममुना वपुषानघे ॥**
**तपसा श्रद्धया नित्यं भक्त्या च हृदि भावितः ॥३७॥**

तदेति ॥ वां युवयोः परितस्तुष्टः सर्वभावेन अहमिति, न मदंशो, नाप्यहं तस्यांशः। परंवपुरिदं प्रदर्शितम् आकारोऽयम्। वपुःपदेन पुत्रत्वं स्थापयति। अन्यथा तयोः परमस्नेहो नस्यात् । अनघेइति संबोधनं तादृशेऽपि रूपे इच्छाभावार्थम् । तदपि च बालरूपम् । रूपस्य बलिष्ठत्वात् स्थानात् प्रच्युतिर्भवेदिति तोषे त्रयं हेतुः– तपः श्रद्धा नित्यं परिचर्या च । एवमपि बहिर्मुखानां न परितुष्यतीति,हृदि भावित इत्युक्तम्॥हृदये सर्वदा मानसपूजादिना भावितः चिन्तितः ॥ ३७ ॥

तदाऽहमाविर्भूतो जातइति वदन्,आविर्भावस्य फलनैकव्यनियमार्थं वरप्रार्थनामप्याह—

प्रादुरासं वरदराड् युवयोः कामदित्सया ॥
व्रियतां वर इत्युक्ते मादृशो वां वृतः सुतः ॥ ३८ ॥

प्रादुरासमिति ॥ वरान् ददते इति वरदाः । अन्ये ब्रह्मादयो यावत्प्रार्थितमेव हि ते प्रयच्छन्ति । तेषां राजा वरदराट् । स तु ततो बहुगुणमलौकिकं च प्रयच्छति । अत एव मादृशसुतवरणे अहमेव वारत्रयं सुतो जात इति वरदराजः ॥ आविर्भावे हेतुमाह ॥ युवयोः कामदित्सयेति ॥ युवयोरिति, बहुकालतपस्तप्तौ निरूपितौ । ताभ्यां चाल्पमेव प्रार्थनीयम् । तपश्च बहु । अतो मन्निष्ठयोस्तपः स्वाभाविकादपि तपसोऽधिकफलमिति तद्दानार्थं वरदराडुक्तः । साधारण्येनैव, व्रियतां वर इत्युक्तं तावपि मां साधारणं ज्ञात्वा बालकसौन्दर्येण च संमुग्धौ, त्वादृशः पुत्रो भूयादिति वृतवन्तावित्याह ॥ मादृश इति ॥ वां युवाभ्याम् ॥ सुतो भूयादित्यर्थात् ॥ ३८ ॥

मोक्षावरणे हेतुमाह—

अजुष्टग्राम्यविषयावनपत्यौ च दम्पती ॥
न वव्राथेऽपवर्गं मे मोहितौ मम मायया ॥ ३९ ॥

अजुष्टेति ॥ ग्राम्यविषयः स्त्रीसंभोगो लौकिकः, प्रीतिः स्थितैव, सेवा न वृत्तेति । न जुष्टो ग्राम्यविषयो याभ्याम् । वैदिकेनापि लौकिकफलसिद्धिर्भवतीति तत्संभवेऽपि लौकिकसिद्धिरिति तन्निषेधार्थमाह ॥ अनपत्याविति ॥ न विद्यते अपत्यं ययोः । चकारादन्येऽपि स्रगादयो नानुभूता इति सूचितम् ।

---

ननु प्रीतिसेवनार्थत्वाज्जुषेरनयोः प्रीतिसत्त्वादजुष्टत्वं कथमितिचेत् सत्यम् । तथापि द्वितीयमर्थमादाय तथोक्तमित्याहुः ॥ सेवा न वृत्तेतीति॥ नन्वजुष्टत्वेऽनपत्यत्वं प्राप्तमेवेति कथनं तस्य किंप्रयोजनकमित्याशङ्क्य तत्तात्पर्यमाहुः॥ वैदिकेनापीति॥ अलौकिकप्रकारक-

दम्पतीपदेनोभयोः सहभावो नियत उक्तः । अतोऽपि मोक्षस्याऽवरणं, रागस्यानिवृत्तत्वादृणानामनिवर्त्तितत्वाद् विरुद्धाश्रमनिष्ठत्वाच्च मोक्षस्यावरणम् । सर्वतःशास्त्रार्थपरिज्ञानेऽपि यदेतत्रितयं तत्र हेतुः— मोहितौ मम माययेति ॥ इयं विशेषमाया भगवल्लीलासाधिका। साधारणी तु शास्त्रान्निवर्त्तत एव । अपवर्गं न च वव्राथे। जन्ममरणानां समाप्तिरपवर्गः । यदि साक्षादपवर्गमप्यप्रार्थयित्वा भक्तिं प्रार्थयेतं, तथाप्यपवर्गो भवेत् । साऽपि न प्रार्थितेति वै निश्चयेन अपवर्गो न प्रार्थितः । म इति पाठे मत्तो मत्संबन्धि वा। प्रमेयबलेनअपवर्गं नप्रार्थितवन्तावित्यर्थः ॥३९॥

---

तन्निषेधार्थकं तदित्यर्थः । अजुष्टेत्यादिविशेषणतात्पर्याणि, रागस्येत्यादिना क्रमेणोक्तानि। ननु मोक्षाधिकविवक्षितलीलाऽमृताब्धिफलके मोक्षवरणपूर्वकहरिसदृशपुत्रवरणे मायामोहस्य हेतुत्वोक्तिर्भक्तिमार्गविरुद्धा, मोक्षस्य चैवमाधिक्यं भवेदित्यत आहुः ॥ इयं विशेषमायेत्यादि॥तर्हि मदनुग्रहात्तन्न वव्राथ इति वक्तुं युक्तं, न त्वेवमितिचेद्, न । अनवबोधात् । प्रकटे भगवति ज्ञानशक्तेरपि प्रकटत्वेऽपि ब्रह्मत्वेन भगवत्त्वादिना च ज्ञानाभावो यः स न मोहम् ऋते । तथा ज्ञानं च लीलारसविरोधीति न तथाज्ञापनम् । नन्वयमप्यनुग्रहादेवेतिचेन्ननु मोहोऽप्यनुग्रहादेवेति बुध्यस्व । तथाऽप्येवंविधेऽर्थे मोहोक्तिः कथं भक्तमनोरमा भवेत् । इत्थम् । अचिन्त्यानन्तशक्तेर्भगवतो नियतकार्या हि ताः सर्वा लीला अप्यनेकविधाः। एवं सति याऽन्तरङ्गलीलायामेवाधिकृता सा तल्लीलास्थभक्तानां मध्ये यस्मिन् यादृशी लीला प्रभोश्चिकीर्षिता तस्मिँस्तदुपयोगिपदार्थेष्वासक्तिं तदतिरिक्तविस्मृतिं च करोतीत्येतन्मात्रसाधर्म्येणैतच्छक्तिकार्येऽपि मोहत्वोक्तिः । प्रकटे प्रभौ सर्वशक्तिप्राकट्येऽपि स्वानुरूपातिरिक्तज्ञानाद्यभावात् प्रमाणमार्गात् प्रमेयमार्गोऽतिविलक्षणो बलिष्ठश्चेति ज्ञापनाय च । अत एव, न न्यवर्तन्त मोहिता इति वक्ष्यते । न हि तत्रामोह उत्तम इति वक्तुं शक्यम् । निवृत्तिहेतुत्वात् । यथा यथैतन्मोहाधिक्यं तथा तथा पुष्टिमार्गे भावप्राचुर्यमिति ज्ञेयम् । अत एव

वरदानमर्थसिद्धमिति तदनुक्त्वा भगवन्निर्गमे जाते प्रथमतो रागनिवृत्त्यर्थं ग्राम्यभोगा भुक्ता इत्याह—

गते मयि युवां लब्ध्वा वरं मत्सदृशं सुतम् ॥
ग्राम्यान् भोगानभुञ्जाथां युवां प्राप्तमनोरथौ ॥ ४० ॥

गते मयीति ॥ मत्सदृशं सुतं वरत्वेन प्राप्य तन्निर्द्धारं कृत्वा ग्राम्यभोगेन च तत्र विघ्नो भविष्यतीति शङ्कामकृत्वा ग्राम्यान् भोगान् अभुञ्जाथाम् ॥ यतो युवां प्राप्तमनोरथाविति भिन्नं वाक्यं, नैश्चिन्त्ये हेतुत्वार्थमुक्तम् । पुनर्युवामिति ग्रहणं संस्कारोद्बोधे संमत्यर्थम् ॥ ४० ॥

यद्यपि युवाभ्यां भ्रमादेव याचितो वरस्तथाप्याविद्यमानं न

---

गोविन्दापहृतात्मत्वेनैवानिवृत्तिसम्भवेऽपि मोहिता इत्युक्तम् । अत एव भगवन्मायावाचकपदयोरसमासः । दास्यभावात् पितृत्वादिभावस्य न्यूनत्वात् । यद्वा, समो मशकेनेति श्रुतेर्भगवतः सर्वसमत्वेऽपि भगवत्समत्वं नान्यस्यास्तीति तादृक्पुत्रवरणं मोहकार्यमिति तथोक्तिः । वस्तुतस्तु अपवर्गं न वव्राथे इत्येतावतैव चारितार्थ्येऽपि म इति यदुक्तं, तेन पुरुषोत्तमसम्बन्धी भक्तिमार्गीयो दास्यरूपो योऽपवर्गः स उच्यते । तस्य सर्वाधिकत्वात्तद्वरणं मोहादेवेति तथा । ननु तदवरणोक्तिप्रयोजनं न पश्यामः । तया विनापि प्रकृतार्थोपपत्तेः । उच्यते । भगवद्वचनैरुक्तप्रकारकस्वरूपदर्शनेन च सर्वार्थतत्त्वज्ञानमभूदित्येवम्भूतास्मत्क्लेशेनाविर्भूतो भगवान् दास्यमेव कुतो नदत्तवानित्याशङ्काभावायैतदुक्तम् । अत्रायं भावः । कामदित्सयेतिवचनान्नियतेच्छयैवाविर्भाव इति भवदकामितं स्वतो न देयम् । अपवर्गे च भवतोः कामो नाऽभूदिति तथेति ज्ञापयितुं तदुक्तिः । तथापि परमकृपालुरेवं कुतः कृतवानिति शङ्का तु, एवं सति याऽन्तरङ्गेत्यादिना प्रागेव निरस्ता । एतेनैव कामदित्सयेति वाक्यादेवाकामिताऽदानस्य प्राप्तेः कामाभावस्य च स्वतः सिद्धत्वात्तदनुवादः किमर्थ इत्याशङ्काऽपि निरस्ता ज्ञेया । कामाभावहेतोर्मोहस्यापि निरूपणात् । अन्यथा मोहनमेव कुतः कृतवानिति शङ्का तिष्ठेदेवेति ॥

देयम् । कृत्रिमं तु न संभवति । सर्वभावेन स्वस्य द्वैरूप्ये श्रुतिविरोधो मर्यादाभङ्गश्च स्यात् । अदानेऽपि तथा । सादृश्यस्य भेदसहिष्णुत्वेऽपि तयोराकार एव तात्पर्यमिति तात्पर्यविरोधाऽभावात्।तात्पर्यज्ञापकं वचनमिति जीववाक्यत्वाद्यथाश्रुतं वचनं बाधित्वा अहमेव पुत्रो जात इत्याह—

अदृष्ट्वान्यतमं लोके शीलौदार्यगुणैः समम् ॥
अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः ॥ ४१ ॥

अदृष्ट्वेति ॥ यद्यपि मत्तोऽन्ये केचन संभवन्ति मायया सृष्टाः । तेषामपि मत्सत्तयैव सत्तेति सर्वात्मनान्यतमत्वं नास्ति । असतः सत्ता नाङ्गीक्रियत इति लोके अदृष्ट्वेत्युक्तम् । यद्यपि कृत्रिमेऽपि रूपसाम्यं शक्यते कर्त्तुं, तथापि शीलौदार्यगुणाः आत्मान्तःकरणनिष्ठा अलौकिका नोत्पादनीया इति विशिष्टस्य मिलितस्य वा अदर्शनमेव । अतोऽहं सुतो वामभवम् । उभयोरपि क्रमेण प्रादुर्भूत इत्यर्थः । स एकधा भवति दशधा भवतीत्यादिश्रुत्या तथा तस्य भवने न कोऽपि विरोधः। जन्मैव मुख्यमिति पृश्निगर्भइति तन्नाम्नैव लोकप्रसिद्धिरुक्ता । स्मृत इति प्रमाणम् ॥ ४१ ॥

अपवर्गस्याप्रार्थितत्वात् पुनर्जन्मान्तरं जातम् । तस्मिन्नपि जन्मनि तयोस्तुल्यत्वात् पुनरहं पुत्रो जात इत्याह—

तयोर्वां पुनरेवाहमदित्यामास कश्यपात् ॥
उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः ॥ ४२ ॥

तयोर्वामिति ॥ तयोरेव युवयोः पुनरेवाहं स्वसदृशमदृष्ट्वा पुनरेवाहं जातः । तयोर्जन्मान्तरे अदितिकश्यपत्वम् । तदाह ॥ अदित्यामास कश्यपादिति ॥ यद्यप्यत्र अदितिगर्भ इति वक्तव्यं,

तथाऽपि उपेन्द्र इत्येव लोके विख्यातः । नामान्तरप्रसिद्धौ हेतुमाह ॥ वामनत्वादिति ॥ द्वितीये जन्मनि नामद्वयम् । उपन्द्रो-वामन इति ॥ ४२ ॥

पुनस्तृतीयं जन्म तयोर्जातम् । तत्राप्यहमेव पुत्रो जात इत्याह—

तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषा युवाम् ॥
जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ॥ ४३ ॥

तृतीयेऽस्मिन्निति ॥ अयं परिदृश्यमानो भवस्तृतीयो भवति । अत्रापि नामद्वयं मुख्यम् । तृतीयस्थाने बहूनि । देवकीनन्दन इति च मुख्यम् । तदग्रे वक्ष्यामः । पूर्वयोर्भवयोरूपभेदोऽस्ति । तृतीये तु जन्मनि तेनैव प्रसन्नेनैव वपुषा तयोरेव भूयो जातः । एवं वारत्रयभवने हेतुमाह ॥ सत्यं मे व्याहृतमिति ॥ यदि कस्मिन्नपि जन्मनि वरानन्तरभाव्ये भगवान् पुत्रो न भवेत् तदा वाक्यमसत्यं स्यात् । पूर्वदेहस्य त्यक्तत्वात् तत्पुत्रो न पुत्रो भवति व्यवहाराभावात् प्रमाणाभावाच्च । अतः पुनर्जन्मान्तरे पुत्रत्वेन भाव्यम् । अग्रे तु जन्माभावात् पुत्रत्वाभावः ॥ सतीति संबोधनं सम्माननार्थम् । सैव पतिव्रता भवति, या कल्पादौ यं पतिं प्राप्नोति कल्पान्तपर्यन्तं सर्वजन्मसु तमेव चेत् प्राप्नोति । तस्याश्च पुनर्धर्माः, अभिज्ञानं च शास्त्रे निरूपितम् । या प्रथमं नम्रियते, मृते म्रियेत । तादृशी त्वमिति ज्ञापयति मोक्षार्थम् । व्यभिचारिण्याः स्त्रियास्तु नमुक्तिः । अतः सर्वदोषपरिहारार्थं सतीति संबोधनमन्ते निरूपितम् ॥ ४३ ॥

एवं पुत्रत्वे हेतुमुक्त्वा तादृग्रूपेणाविर्भावे हेतुमाह—

एतद् वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे ॥
नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जन्यते ॥ ४४ ॥

एतादिति ॥ वां युवयोरर्थे एतत् पूर्वानुभूतं रूपं दर्शितम्। संबन्धिदर्शने संबन्धिनः संस्कार उद्बुद्धो भवति। एतद्विषयको लुप्तोऽपि संस्कारश्चोद्बुद्धो भवति। सांनिध्यात् सर्वज्ञतायां तु वैराग्यं स्यात्। तदा अविहितभक्तिरसो नानुभूयेत। रूपेण तदुद्बोधने तु तत्कालमात्रस्यैव स्मरणम्। वाक्याज्ज्ञानं तु प्रत्यक्षाद् दुर्बलमिति न काप्यनुपपत्तिः ॥ प्राग्जन्मनोः प्रथमजन्मन एव वा स्मरणाय॥ एतावता क्लेशेनायं भगवान् पुत्रो जात इति। केवलवाक्ये तु भगवतो माहात्म्यमुच्यमानं शास्त्रार्थपरं स्यात्। तदाह ॥ अन्यथा रूपप्रदर्शनव्यतिरेके। केवलमुच्यमाने मर्त्यलिङ्गे रूपे मानुषशरीरे मद्भवं ज्ञानं न जायते, साक्षाद्भगवानयमिति। प्रदर्शिते तु रूपे उच्यमानं ज्ञानमनुभवारूढं भवति॥ ४४॥

अधुना तु अप्रार्थितेऽप्यपवर्गे मुक्तिर्भविष्यतीत्याह—

**युवां मां पुत्रभावेन ब्रह्मभावेन चासकृत् ॥**
**चिन्तयन्तौ कृतस्नेहौ यास्येथे मद्गतिं पराम् ॥ ४५ ॥**

युवामिति ॥ प्रमेयबलस्य प्रकटीकृतत्वाच्छास्त्रस्य गौणत्वादविहितस्नेहेन पुत्रभावेन विहितस्नेहेन ब्रह्मभावेन वा विषयस्य तुल्यत्वात् प्रकारस्याप्रयोजकत्वाद् यथाकथञ्चिन्मयि कृतस्नेहौ परां मद्गतिं व्यापिवैकुण्ठाख्यां यास्येथे। माहात्म्यज्ञानपूर्वकसुदृढसर्वतोऽधिकस्नेहस्य तुल्यत्वात्। अत एव भगवान् गोपिकादीनामपि माहात्म्यज्ञानम् उत्पादयिष्यति। अन्यथा बोधांशोऽधिकः स्यात्। भक्तानां प्रपञ्चाभावस्य निरोधत्वात्

---

यदि भक्त्यङ्गत्वेन ज्ञानं नोच्येत, किन्तु स्वातन्त्र्येण, तदा यथाकथञ्चित् स्नेहमात्रेण निरोधपदार्थसिद्धेरस्मिन् स्कन्धे ज्ञानमुच्यमानम् एतदर्थाऽसङ्गत्यात्र प्रवेशमलभमानं वाक्यभेदापादकं भवेदित्याहुः ॥ अन्यथा बोधांश इत्यादि ॥

अत एव पूर्वस्कन्धे उत्पत्तिनिरूपणेन स्वरूपत एव भक्ता निरूपिताः । प्रेमज्ञानं निरोधश्च यथैव भवति तदत्रैव वक्ष्यते। आर्थिकमत्र नोच्यते। इति मां गोकुले नय ॥ तत्र स्थापयित्वा तत्रत्यां कन्यामत्रानयेति मुखतो नोक्तम् । एतदुक्त्वैव पश्चात्तूष्णीं जात इति ज्ञातव्यम् । एभिर्वचनैर्भगवता वसुदेवदेवक्योः स्वाऽवतारात् पूर्वं तदनन्तरं च दुःखप्राप्तौ हेतुरपि निरूपित इति ज्ञेयम् । तथाहि । मत्तः कामानभीप्सन्ताविति वाक्यात्तदर्थमेव भगवदाराधनं पूर्वं कृतं, न तु भगवदर्थम्। तस्य चानिष्फलत्वाद्धर्याविर्भावे सौन्दर्यं दृष्ट्वा तादृशः सुतो वृतो, न तु स्नेहेनाश्चर्या प्रभुप्राकट्यं वृतम् । अत एव वरं मत्सदृशमित्यादिना स्वप्राप्त्यनन्तरमपि ग्राम्यभोगभोजनमेवोक्तम् । एवं सति स्वसाम्यमन्यत्रादृष्ट्वा स्वस्यैव तथाविर्भावने प्रभोर्निर्बन्धोऽभूत् । मुक्तानामपि दुरापस्य स्वरूपस्याल्पार्थे प्रकटीकरणमापतितं यतः । अदृष्ट्वान्यतमामितिवाक्येनायमेवार्थो ज्ञापितः प्रभुणा। अतोऽधुना प्रभुप्राकट्यनिमित्तकः कंसकृतो निर्बन्धोऽभूत् । पुत्रत्वे निर्बन्धात् कीर्त्तिमदादिपुत्रनाशोऽपि । साम्ये निर्बन्धाद्गुणैस्तत्सम्भवाद् गुणसमसंख्यानां तेषां तथा, मर्यादारक्षायै तद्दण्ड इवायं प्रभुणा सम्पादितः । अद्भुतकर्मत्वाद्भगवत एतयोः स क्लेशः स्नेहाऽतिशयहेतुरभूत् । क्लेशेन प्राप्तेऽर्थे तस्यावश्यकत्वात् ॥ आविर्भावे पुत्रतया साधनं तु तपोऽभवत् * अग्रे लीलारसप्राप्तौ साधनं मृग्यमेव हि ॥ भक्तिमार्गीयमित्यात्मवियोगमकरोद्धरिः* तदा तु स्वत एवासीद्भगवद्भावसन्ततिः ॥ एतावन्ति दिनान्यासन्नेवं कुर्वन् भविष्यति * एतावन्मासिकश्चासीदेवमेवं करिष्यति॥ एतावद्वार्षिकश्चासीत्तेन चैवं विधाः शुभाः * लीलाः कुर्वन् साग्रजः श्रीप्रभुस्तत्र भविष्यति ॥ कुशल्यास्ते साग्रजो नु कदा

द्रक्ष्यामि तादृशम् * एवंविधानं तद्भावैरत्यार्त्या दर्शने तयोः॥ मिथस्तथालापतश्च सर्वथेन्द्रियवृत्तयः * सर्वा हरिपरा आसन् स एव सततं हृदि ॥ वियोगतापतप्तेऽभूत्तेनासां जीवनं तयोः * तेनैकादश वर्षाणि तथा कुर्वन् हरिर्बभौ ॥ युवां मामिति वाक्येन चेममेव वरं ददौ * अन्यथैतादृशो भावो न भवत्येव कुत्रचित् ॥ अतो माहात्म्यधीयुक्तस्नेहोऽभवादिति प्रभुम् * चिरात् प्राप्यापि पितरौ सस्वजाते न शङ्कितौ ॥ ४५ ॥

एवमुक्त्वा रूपान्तरस्वीकरणं कृतवानित्याह—

श्रीशुक उवाच ॥

इत्युक्त्वाऽऽसीद्धरिस्तूष्णीं भगवानात्ममायया ॥
पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः ॥ ४६ ॥

इत्युक्त्वाऽऽसीदिति॥तूष्णीम्भावोऽनुक्तसिद्धोऽपि रूपवज्ज्ञानस्याऽपि तिरोभावप्रतिपादनार्थः। यथा रूपं प्राकृतं स्वीकृतवान् एवं प्राकृतमेव ज्ञानं स्वीकृतवानिति।तथा सति रूपान्तरस्वीकरणं सम्यगुत्पद्येत।नन्वेवं स्वविरुद्धधर्मं कथं स्वीकृतवानित्याह हरिरिति॥यतः स सर्वदुःखहर्त्ता स्वरूपमप्यन्यथा करिष्यतीत्याशङ्क्याह॥भगवानिति॥रूपज्ञानकार्ययोरपि तदा प्राकट्यं न स्यादित्याशङ्क्याह ॥ आत्ममाययेति ॥ स्वस्यैव सर्वभवनसामर्थ्येन तथा कृतवान्। ततः स्वेच्छया यदा तत्कार्यमायास्यतीति गीतोपदेशने भीष्ममुक्तौ च तथैव तदा प्रकटीभविष्यति । अन्यदा तु मातृप्रार्थनया रूपान्तरमेव प्रदर्शयिष्यतीति भावः । यदैव तूष्णीं

---

इत्युक्त्वासीद्धरिस्तूष्णीमित्यत्र आत्मपदेनेदमाकूतम् ॥ यथात्मा अविकृतो नित्यः शुद्धः सद्रूपस्तथेयं मायाप्युक्तगुणविशिष्टा । अत एव तादृशगुणविशिष्टलीलायाः प्रत्यायिका,नासत्पदार्थस्य। संसार

स्थितस्तदैव सद्यस्तत्क्षणमेव प्राकृतः शिशुर्बभूव अच्छिन्ननालोऽवस्थितः । नटानां रूपान्तरस्वीकारे दिदृक्षूणां परोक्षताऽपेक्ष्यते । अत्र तु तन्नापेक्ष्यत इत्याह ॥ पित्रोः सम्पश्यतोरि-

---

हेतुभूता माया यथा जीवस्य स्वरूपं विस्मारयित्वा प्रापञ्चिकविषयासक्तिं जनयत्येवमियमपि भक्तानां स्वस्वरूपविस्मृतिं भगवदासक्तिं च जनयतीत्येतावद्धर्मसाम्येनास्यामपि मायाशब्दप्रयोगः । वस्तुतस्तु यथाऽन्ये लीलोपयोगिनो गोपीगोपादय आनन्दरूपा एवमियमपीति ज्ञापनायात्मपदम् । अन्यथा पुरुषोत्तमवाचिभगवत्पदाऽव्यवहितोक्त्यैव मायाया भगवदीयत्वप्राप्तेरात्मपदं व्यर्थं स्यात् । एवं सति, प्रकाशाश्रयवद्वा तेजस्त्वादिति न्यायेन भगवद्रूपत्वादत्र कर्मधारयोऽप्यभिप्रेत इति ज्ञेयम् । तथाचेदं पदं सर्वत्रानुषज्ज्यते । तथाहि । अत्र लीलार्थं भगवता तौ पितृत्वेनाङ्गीकृताविति भगवच्छक्त्यैव तयोस्तथाविर्भावः । अन्यथा निषेकजननाद्यभावेन तयोस्तथात्वमुच्यमानं बाधितं स्यात् । एतदेवाह ॥ आत्ममायया पित्रोरिति ॥ ननु एतद्वां दर्शितं रूपमिति वाक्यात् पूर्वरूपदर्शन एव भगवदिच्छाया उक्तत्वाद्, नान्यथा मद्भवं ज्ञानमिति वाक्याद्दर्शनस्यानन्यलभ्यत्वाच्चैतद्रूपदर्शनं कथमेतयोरत आह ॥ आत्ममायया सम्पश्यतोरिति ॥ एतेन चक्षुस्सामर्थ्येनादृश्यत्वं सूचितम् । अतिशयेनोपक्रान्तकार्योपयोगित्वं हि सम्यक्त्वम् । तेन पूर्वमीश्वरत्वेन जानतोर्लीलोपयोगिमायाकरणकदर्शने सम्यक्त्वं स्वपुत्रत्वेनापि दर्शनं ज्ञेयम । तथैव लीलायाः करिष्यमाणत्वात्, पित्रोरितिवचनाच्च । यद्वा लौकिकभावे सत्येव लीलोपपत्तिरिति दर्शने लीलोपयोगिमायाकरणकत्वनिरूपणेन पितृत्वोक्त्या च पुत्रत्वज्ञानं प्राप्तमेव । तच्च न केवलं, किंत्वीश्वरत्वानुसन्धानसहितमिति तदेव सम्यक्त्वम् । युवां मां पुत्रभावेन ब्रह्मभावेन चेति भगवद्वचनात् । अथवोक्तरूपमायाकरणकदर्शने तद्विरुद्धाविषयकत्वमेव सम्यक्त्वम् । तथाच ब्रह्मभावस्य लीलाविरोधित्वेन तद्रहितं स्वस्मादुत्पन्नइत्येव ज्ञानं सम्यग्दर्शनम् । एवं सति तया पश्यतोस्तयोः परं प्राकृतः शिशुर्बभूवेति तद्दर्शनप्रकारकथनम् । वस्तुतस्तु भगवान् षड्गुणसम्पन्नः परमकाष्ठापन्नः शुद्धब्रह्मरूप एव यः शिशुः शिशुरूपः स सद्यस्तस्मिन्नेव क्षण आसी-

दु दृष्टः प्रकटो वा जात इति योजना । तत्राऽभवद्भगवान् व्यासपुत्र इत्यत्रेवात्राप्यासीदिति पदस्य नोत्पत्तिरर्थः । जातो हि बालो रोदिति । तच्च द्वाःस्थजागरणहेतुरिति तूष्णीं तथासीत् । अपरोक्षत्वेऽप्यलौकिकत्वेन ज्ञानाभावात् सोंऽशः परोक्ष एवेति लिट्प्रयोगः । अपरं च । इह हि तत्तत्क्षणसम्बन्धित्वेनोच्यमानापि सर्वा लीला तथाभूतैव शुद्धब्रह्मधर्मरूपा नित्यैवेति, कृतागसं तमितिश्लोकोक्तरूपवन्नालादिसहितशिशुरूपस्यापि शुद्धब्रह्मत्वाद्यथाश्रुतेऽपि न काऽप्यनुपपत्तिः । तच्छ्लोकोक्तरूपस्यैव, नचान्तरित्यादिना शुद्धब्रह्मत्वमग्रे शुकेनोक्तमिति न काचिच्छङ्कात्र । लीलाया निरोधार्थत्वाद् यथैव सम्भवति तथैव करोतीति न प्राकृतानुकरणलीलायां काचिन्न्यूनता । प्रत्युत भक्तार्थ एवमपि करोतीत्युद्भुतमाहात्म्यख्यापकमित्येतत्सर्वं हृदि कृत्वा स्वस्यैव सर्वभवनसामर्थ्येन तथा कृतवानित्याद्युक्तमिति ज्ञेयम् । बबन्ध प्राकृतं यथेति प्राकृतदृष्टान्त उक्तोऽग्रे । अथवा शेषाधिकाण्प्रत्ययान्तोऽत्र प्रकृतिशब्दः । तेन यथा चक्षुषा ग्राह्यं रूपं चाक्षुषमित्यादिशब्दास्तथायमपीति प्रकृत्या ग्राह्यः प्राकृत इत्यर्थः सम्पद्यते । लौकिकालौकिकभेदेन हि द्विविधा जीवाः । तेषां प्रकृतिरपि तथा । तथाच, मल्लानामशनिरितिश्लोकोक्तरीतिवद् अलौकिकप्रकृतिभिरलौकिकत्वेन ग्राह्यो लौकिकप्रकृतिभिर्लौकिकत्वेनेत्येतादृशो, वस्तुतस्त्वलौकिक एव शिशुर्बभूवेत्यर्थः सम्पद्यते । अत्र लौकिकव्यवहारोपयोगि ज्ञानं लौकिकं, तद्वन्तस्तथा । शास्त्रीयं ज्ञानमलौकिकम् तद्वन्तस्तथेत्युच्यन्ते । तेन नन्दादीनां लौकिकत्वेन भानेऽपि लीलाया अलौकिकत्वात्तन्मध्यपातित्वेन तज्ज्ञानादीनां न लौकिकत्वम् । तेषां पुत्रत्वादित्वेन ज्ञानं शास्त्रेणानूद्यते परं, न तु विधीयत इति शास्त्ररीतिमपेक्ष्य लौकिकत्वम् उच्यते । नैतावता काचिन्न्यूनतात्र । लीलात्वेनालौकिकत्वमुक्तमेव । यद्वा प्रथमस्कन्धे भीष्मोक्तौ,प्रकृतिमगन् किल यस्य गोपवध्वइत्यत्रेवात्रापि प्रकृतिशब्दो भगवत्स्वरूपवाची । तथाच पूर्ववत् प्रकृत्या स्वरूपेणैव ग्राह्यः । तथा, न तत्र सूर्यो भातीत्यादिश्रुतिभिः, नाहं वेदैरित्यादिस्मृतिभिश्चेतरसाधननिषेधाच्छ्रुत्यन्तरे च, नायमात्मा प्रवचनेन लभ्यइत्यादिनेतरसाधननिषेधपूर्वकं, यमेवैष वृणुते तेन लभ्य इत्यादिना भगवतैव भगवाँल्लभ्य इति निरूप्यते । तथाचैतादृशशुद्धब्रह्मरूपो लोकवेद-

ति ॥ लौकिकज्ञाननैपुण्यं मातुः परमार्थज्ञाननैपुण्यं पितुः । उभयमपि विद्यमानमेव न भगवत्सामर्थ्यस्य प्रतिबन्धकम् ॥४६॥

एवं स्वीकृत्य रूपान्तरं तत्र स्थितौ प्रयोजनाभावात् स्वयं गमने रूपान्तरस्वीकारवैयर्थ्यात् तस्य चाज्ञानात् सर्वसमाधानार्थं तं बोधयित्वा तद्द्वारा स्वयं गोकुले गतवानित्याह—

ततश्च शौरिर्भगवत्प्रचोदितः
सुतं समादाय स सूतिकागृहात् ॥
यदा बहिर्गन्तुमियेष तर्ह्यजा
या योगमायाऽजनि नन्दजायया ॥ ४७ ॥

ततश्चेति ॥ प्राकृतभावानन्तरं शौरिश्चकारादाज्ञापनानन्तरं च सुतं भगवन्तं समादाय सम्यग्गृहीत्वा उत्तमपात्रं वस्त्रं च प्रसार्य तदुपरि स्थापयित्वा स सूतिकागृहाद् यदा बहिर्गन्तुमियेष तर्हि तस्मिन् समये नन्दजायया योगमाया अजनि जनि-

---

प्रसिद्धः पुरुषोत्तमः शिशुर्बभूवेत्यर्थः ॥ तयोः सम्पश्यतोरेव तथाकरणे उपपत्तिमाहुः ॥ लौकिकज्ञानेत्यादिना ॥ सामर्थ्यस्य, सामर्थ्यप्रकटनस्येत्यर्थः । इदमत्राकूतम् । अनेनैव रूपेणाधुनैव कंसं मारयित्वा सर्वसमाधानं कर्तुं सामर्थ्ये सत्यपि यद्रूपन्तिरप्रकटनं तत्, समुद्विजे भवद्धेतोरधीरधीरित्यादिवाक्यैर्लौकिकरीत्यैव स्नेहातिशयो ज्ञायते । येन भगवतः कंसाभिमुखत्वमात्रेऽपि प्राणापगमो भवेत् । लोकविद्वेषभिया रूपोपसंहारप्रार्थनेनापि लौकिकरीत्यैव स ज्ञाप्यते मातुः । पितुस्तु पूर्णमाहात्म्यज्ञानवत्त्वेनोक्तशङ्काभावेऽप्यनेनैव रूपेण अधुनैव कंसमारणे भक्तदुःखनिवृत्तौ सत्यां स्थितौ प्रयोजनाभावा- ऽस्माकं पुनर्दर्शनं न भविष्यति चेन्न प्राणस्थितिर्भविष्यतीत्यभि- प्रायेण तद्वृत्तान्तकथनादेतद्रूपोपसंहारेऽन्यत्राधुना गमनमभिप्रेतमि- ति ज्ञायते । अन्यथा माहात्म्यज्ञानवत्त्वेन सर्वज्ञतामपि प्रभोर्जानाती- ति न तन्निवेदयेत् । तथाच तदा तद्दर्शनसत्त्वोक्त्या तज्ज्ञानस्योक्त- रूपस्य हेतुत्वं सूच्यत इति युक्तं तथात्वमिति ॥

ता ॥ शौरिरिति गमने भयाभावः ॥ स इति भगवद्वाक्ये विश्वासः । सुतमिति तस्यापि पुत्रत्वबुद्धिः प्राकृतेव जातेति ज्ञापितम् ॥ सूतिकागृहादिति ॥ प्रसवधर्मास्तत्रापि गृहे आविर्भूताः, देवक्या अपि सूतिकात्वं जातम् । साधारणमोहस्य निवर्त्तकं साधारणं ज्ञानामिति । गमनस्वाच्छन्द्यं कपाटोद्घाटनं च । आत्मन इव देहस्यापि विस्मरणं यथा भवति तदर्थं तस्मिन्नेव समये योगमाया जाता । भगवत्समानकाले चेज्जाता भवेत् तदा देवकीवसुदेवयोरपि प्रस्वापः स्यात् । अनेन मुहूर्त्तानन्तरं सा जातेति ज्ञायते । नवम्यां च सा जाता, रोहिणी तु तुल्या । अतो रोहिण्याः कृत्तिकावेधो न दोषाय । सप्तमीवेधस्तु दोषायैव । पुत्रोत्सवाऽऽदिकं शुद्धनवम्यामेव जातमिति शुद्धाऽष्टम्यभावे नवम्यप्युपोष्या । अन्तःस्थिते भगवति मायोद्गमो न भवतीति यदैव बहिर्गन्तुमियेष तदैव जातेत्युक्तम् । सा हि योगार्थमेव माया भगवतः कार्योपायार्थमेव लोकान् व्यामोहयतीति । माया-

---

सर्वमोहनस्वभावायास्तस्या आविर्भावे वसुदेवे तथात्वं कुतो नेत्याशङ्क्य तन्निवारणाय, भगवत्प्रचोदित इति पदतात्पर्यमाहुः ॥ साधारणमोहस्येति ॥ भगवता गोकुले स्वनयनार्थं ततः कन्यायाश्चाऽऽनयनार्थं स प्रेरित इत्येतावति कार्ये भगवज्ज्ञानशक्त्यैव व्याप्त इति योगमायाजनितसर्वसाधारणमोहस्य निवर्तकमुक्तरूपं ज्ञानमिति तथेत्यर्थः । यथाऽन्यः कश्चिच्चौर्येण गच्छन् पद्भ्यां शनैश्च गच्छति स्वचातुर्येण, तथैव वसुदेवोऽपीति ज्ञाने साधारणत्वम् । अन्यथा गोपाला भाण्डीरमिवायमपि गोकुलं प्रापितः स्यात् । यद्वा भगवद्विषयकज्ञानतारतम्येन मोहाऽपगमतारतम्यमिति भगवति लोकसाधारणं ज्ञानमधुनास्यास्तीति तादृङ्मोहोऽप्यपगतइति तथेत्यर्थः तावान् बाह्योऽपि बन्धो निवर्तत इत्याहुः ॥ कपाटोद्घाटनं चेति तदा देवकीत्यादि ॥ दर्शनेन हि मोहाभावः । समानकालत्वे जन्मनं दर्शनलक्षणो मोह एव भवेदित्यर्थः ॥

याः स्वतन्त्रज्ञानपक्षं व्यावर्त्तयितुं, नन्दजायया जनितेत्युक्तम् । न तु भगवानिव सा स्वत आविर्भूतेति ॥ ४७ ॥

तस्याः कार्यमाह—

तया हृतप्रत्ययसर्ववृत्तिषु
द्वाःस्थेषु पौरेष्वनुशायितेष्वथ ॥
द्वारस्तु सर्वाः पिहिता दुरत्यया
बृहत्कपाटायसकीलशृङ्खलैः ॥ ४८ ॥
ताः कृष्णवाहे वसुदेव आगते
स्वयं व्यवर्यन्त यथा तमो रवेः ॥
ववर्ष पर्जन्य उपांशुगर्जितः
शेषोऽन्वगाद् वारि निवारयन् फणैः ॥ ४९ ॥

तयेति ॥ तया मायया हृताः प्रत्ययानां सर्ववृत्तयो येषु जाग्रत्स्वापयोः प्रत्ययानां ज्ञानानां वृत्तय संशयादय उत्पद्यन्ते । मायामोहितास्तु मूर्च्छिता एव जाताः । जगति तस्यामुत्पन्नायां तत्प्रभावः । यशोदादयस्तु मुग्धा एव, गोकुलवासिनश्च । ततः क्रमेण मथुरायां द्वास्थास्ततः पौराः । न केवलं पूर्ववद् बुद्धिरेव गृहीता, किन्तु निद्रयातिरिक्तबुद्धिरपि सम्पादिता। यथा भूयान् कालो लोकान्तरं गतानामिव मुग्धतया गच्छति, तथा अनुशायितेषु सुषुप्तिं प्रापितेषु सत्सु । इयं हि माया एतावत् कार्यमेव कृतवती । अन्यत् त्वन्यथा जातमिति वदन् प्रक्रमान्तरमाह ॥ अथेति ॥ पूर्वं तैरेव द्वारपालकैः सर्वा एव द्वारो बृहत्कपाटायसकीलशृङ्खलैः पिहिताः, स्वभावतोऽपि दुरत्ययाः। गजा व्याघ्राः क्वचित् सिंहा विषमाश्चैव भूमयः * दिवसेऽपि गतौ नित्यं सर्वथा भयहेतवः ॥ येषु द्वारेषु गमनमात्रेऽपि साधारणानां वन्धो भवति। तत्रापि पिहिताः।बृहन्ति कपटानि

तत्र आयसाः कीलाः शृङ्खलाश्च यासु। कीलसहिता वा शृङ्खला यासु। कुञ्चिकयैव उद्घाटयितुं शक्याः। कुञ्चिकाऽपि विषमा। एतादृशा अपि, कृष्णवाहे वसुदेवे समागते स्वयमेव व्यवर्यन्तविशीर्णा जाताः। स्वयमेवोद्घाटितकपाटा जाताः। भगवतः सर्वमोक्षदातृत्वात् कपाटानामप्यचेतनानामतितामसैर्बद्धानां मुक्तिः प्रदर्शिता। अनेनान्येषां मुक्तिर्व्याख्याता, यदि शुद्धसत्त्वं भगवद्वाहकं च चेद्भवति। एतत्प्रदर्शनार्थमेव कृष्णवाहे वसुदेव इत्युक्तम्। अयमेवोपाय इति ज्ञापयितुं दृष्टान्तमाह॥ यथा तमो रवेरिति॥ उपायसहस्रेणापि सर्वं तमो न गच्छति। उदिते तु सूर्ये स्वत एव गच्छति। तथा शुद्धसत्त्वे भगवत्सहिते सत्येव सर्वाविद्यानाशः, सर्वासाध्यानां स्वत एव सिद्धिर्नान्यथेति निरूपितम्। अन्तर्द्वारेषु निर्गतेषु मायायाः प्रवेशे उभयोः सांमुख्ये यदासीत्तदाह। ववर्षेति॥ वृष्टिरपि सर्वेषामनुत्थाने हेतुः, उपांशुगर्ज्जितं चानुत्थाने शब्दान्तरप्रतिबन्धे च। अधिकगर्ज्जने तेनैव प्रबोधः। एतावन्मायाकार्यं साधारण्येन प्रवृत्तं वसुदेवस्यापि खेदहेतुर्भवति। अतस्तन्निवारणार्थं शेषोऽन्वगात् पातालात् समागत्य फणैः पर्जन्यवारि निवारयन् अन्वगात्। पश्चाद्भागेन गतवान्। भगवत्सम्बन्धात्तत्कृतं तु भयं न भवति। अन्तरिक्षे निवारयन् गच्छतीत्येके। फणैरिति पदात्। अन्वगादिति च पश्चादेव छत्रधारीव गच्छतीति ज्ञायते॥ ४८॥ ४९॥

यथा यथा गोकुलनिकटे गमनं तथा तथा मायासान्निध्याद् गमने क्लेशाधिक्यं, भगवत्सान्निध्याच्च तदभाव इति ज्ञापयितुं यमुनोत्तरणप्रकारमाह—

मघोनि वर्षत्यसकृद्यमानुजा

गम्भीरतोयौघजवोर्मिफेनिला ॥
भयानकावर्तशताकुला नदी
मार्गं ददौ सिन्धुरिव श्रियः पतेः ॥ ५० ॥

मघोनि वर्षतीति ॥ भगवज्जन्मसमये सर्वतो निवृत्ता अपि मेघा मायाजन्मनि सर्वे समागताः । इन्द्रोऽपि मायामोहितो मेघप्रेरको जातः । केवलाश्चेद् भगवति गच्छति निवृत्ता अपि भवेयुः । अल्पानां मोहितानामल्पधैर्यवत्त्वेन महति विरोधासम्भवात् । अत आह ॥ मघोनीन्द्रे असकृद्वर्षति सति । स्वभावतोऽपि यमुना क्रूरेत्याह ॥ यमाऽनुजेति ॥ अत एव गम्भीरतोयौघजवोर्मिफेनिला ॥ गम्भीरो भयानकोऽगाधो यस्तोयौघः, तस्य जवेन वायुवशाच्च ये ऊर्मयः, तत्सहिता फेनिला च । त्रिविधोऽपि दोषस्तस्या निरूपितः । अतिवेगो राजसः, फेनादिस्तामसः । एवं कालकृतं दोषमुक्त्वा स्वाभाविकदोषमाह ॥ भयानकावर्त्तशताकुलेति ॥ भयानका भयजनका ये आवर्त्ता भ्रमरास्तेषां शतैराकुला समप्रवाहरहिता व्यग्रा वा आवर्त्तास्तामसाः, वैयग्र्यं राजसम्।एवं स्वाभाविका अपि त्रयो दोषाः। एवं दुष्टापि भयान्मार्गं ददौ । सर्वा नद्यः समुद्रपत्न्यः । रामाऽवतारे समुद्रोऽपि मार्गमप्रयच्छन् शोषितः । किं पुनस्तस्याल्पसत्त्वा भार्या । अतः स्वरूपादेव प्रच्युता भविष्यामीति सिन्धुरिव मार्गं ददौ । किञ्च, यमुनाजले अग्रे लक्ष्मीभिः सह क्रीडां करिष्यति । अतः सन्तोषादपि ददौ । यथा लक्ष्मीपतेर्जामातुः श्वशुरः समुद्रः कदाचित् स्वगृहे नयन् मार्गं प्रयच्छति । अथवा श्रीः सीतैव । तस्या एकस्याः कामुकश्चेत् समुद्रशोषं कृतवान्, बह्वीनां गोपिकानां कामुकः कथं न कुर्यात् ॥ ५० ॥

एवंमार्गवन्नदीमुत्तीर्य गोकुले गतस्य कृत्यमाह—

नन्दव्रजं शौरिरुपेत्य तत्र तान्
गोपान् प्रसुप्तानुपलभ्य निद्रया ॥
शिशुं यशोदाशयने निधाय तत्-
सुतामुपादाय पुनर्गृहानगात् ॥ ५१ ॥

नन्दव्रजमिति ॥ शौरिरित्यऽभये। नन्दस्य च मित्रत्वात् व्रजे च गवामपि कदाचिच्छब्दो भवति । अतः पुरुषगमन-शब्देनापि न तत्रत्यानां जागरणम् । उपेत्य समीपे गत्वा। अनेन शनैर्गमनं सूचितम्। तत्र च तान् सर्वदाजागरणयुक्तानपि, तदा प्रसुप्तानुपलभ्य । केवलमपि शयनं सम्भवतीति निद्रयेत्युक्तम् । शिशुं बालकं भगवन्तम् । भगवत्त्वज्ञानेन पुत्रत्वस्य वक्तु-मशक्यत्वान्नामान्तराणामकृतत्वाद् भगवत्त्वे स्थापनस्यायुक्तत्वा-च्छिशुमित्युक्तम् । शयने शय्यायाम् अयुक्तमित्याशङ्क्य शयनपदं दत्तम् । यशोदायाः शयने सति । यशोदायाः शयनं यत्रेति निधाय नितरां स्थापयित्वा तत्सुतां मायामुपादाय पुनस्तेनैव मार्गेण स्वगृहानगात् ॥ ५१ ॥

देवक्याः शयने न्यस्य वसुदेवोऽथ दारिकाम् ॥
प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ५२ ॥

ततो देवक्याः शयने तस्या अपि शय्यास्थानं कृत्वा तां स्थापयित्वा ॥ अथेति, भिन्नप्रक्रमे । यशोदाशयने तूष्णीं शनै-रज्ञापयन् । अत्र तु तदभावः । दारिकां कन्याम् । अनादरे दारिका । स्वयमेव पदोः पादयोर्लोहं प्रतिमुच्य पूर्ववदेव यदा भगवज्जन्म न जातं तदा यथा ॥ ५२ ॥

अत्र यशोदायाः शयनं न सम्भवति। प्रसवे लोके अज्ञाना-ऽसम्भवादित्याशङ्क्याह—

यशोदा नन्दपत्नी च जातं परमबुद्ध्यत ॥
न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृतिः ॥ ५३ ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे श्रीकृष्ण-
जन्मनाम तृतीयोऽध्यायः ॥ १० ॥ ३ ॥

यशोदेति ॥ यशो ददातीति प्रसवे ज्ञाते भर्त्तुः सुखं भव-
तीति नन्दस्य पत्नीति तादृशे समये अन्यदापि जागरणं जात-
कर्माद्यावश्यकत्वात् पत्नी भूत्वाऽपि सावधानापि जातमेव पर-
मबुद्ध्यत, न तु जातस्य लिङ्गं पुत्रः पुत्रीवेति । यतः परिश्रान्ता
प्रसवार्थं वेदना महती जाता । पश्चाच्छ्रान्ता यदा तदैव प्रसवो
जात इति प्रसवेन सह निद्रापि जाता । तया कृत्वा अपगता
स्मृतिर्यस्याः । मम प्रसवो जात इति पूर्वानुसन्धानं स्मृतिः ।
अतः पूर्वं वसुदेवकृतं सुस्थम् ॥ ५३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायां
दशमस्कन्धविवरणे तृतीयाध्यायविवरणम् ॥ ३ ॥



चतुर्थोऽध्यायः ॥ १० ॥ ४ ॥

मायायाः कार्यमधुना चतुर्थे विनिरूप्यते*अन्यथा भगवत्कार्यं न भवेदनिमित्ततः ॥ ज्ञापने दुःखसुखदे ततोऽपि ज्ञापने तथा * कंसस्य सहभृत्यस्य धर्मबाधो न चान्यथा ॥ तामसप्रभुके राज्ये कुतो धर्मस्तु तद्गतः * अतः पूर्वस्य नाशो वै कर्त्तव्यं तामसाश्च ते ॥ ब्राह्मणा अपि तद्देशे स्वभावात्तामसा मताः * कालस्तथाविधो यस्मात् पश्चाज्जातस्तु सात्त्विकः ॥

भगवत्कार्यवैपरीत्यं मायाकार्यं इति ज्ञापयितुमुद्घाटितकपाटानां द्वाराणां पुनः पिधानमाह—

श्रीशुक उवाच ॥

बहिरन्तः पुरद्वारः सर्वाः पूर्ववदावृताः ॥
ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥१॥

बहिरन्तरिति ॥ पुरो बहिर्द्वाराणि अवान्तरद्वाराणि च सर्वाः पूर्ववदेवावृताः । वैलक्षण्ये रक्षकाणां ज्ञानसम्भवाज्ज्ञानं भवेदिति । पुनर्बन्धनं मायाकार्यमुक्त्वा, पूर्वं वसुदेवदेवक्योर्नि-

---

अनिमित्त इति ॥ भक्तदुःखाभावादित्यर्थः ॥ ज्ञापने इति ॥ मायाकृतरोदनेन स्वज्ञापनम् । ततो गृहपालकृतबालजन्मज्ञापनं च कंसे । एते उभे अपि तथेत्यर्थः ॥ ततोऽपीति ॥ एतदुभयज्ञापनानन्तरं, यत्र क्वा जातइति मायाकृतं भगवज्जन्मज्ञापनं, कंसकृतज्ञापनं च मन्त्रिषु। एते उभे अपि दुःखसुखदे इत्यर्थः ॥ न चान्यथेति ॥ मायामोहं विनेत्यर्थः । ननु धर्मस्थापनहेतोर्भगवदवतारस्य तन्नाशहेतुत्वं कथमुच्यते। जातः खलु तवान्तकृद्, यत्र क्वेति वाक्यश्रवणेनैवानिर्दशान्निर्दशांश्चेत्यादिमन्त्रणस्य जातत्वादित्यत आहुः ॥तामसप्रभुक इति॥ तामसाश्च त इति तद्गताः पश्वादयइत्यर्थः । एवमपि कण्टकन्यायेन धर्मप्रतिपक्षदूरीकरणं युक्तमितिभावः॥ पश्चादिति ॥ तमःकार्यनिवृत्तेः पश्चाज्जातो धर्मस्तथेत्यर्थः ॥

वृत्तस्यापि भयस्य जननार्थं रोदनमपि कृतवती । तेन रोदनेन सर्वेषां जागरणं जातमित्याह ॥ तत इति ॥ बालस्योत्पन्नस्य ध्वनिं श्रुत्वा गृहपालाः सूतीगृहरक्षकाः सम्यगुत्थिताः ॥ १ ॥

तेषां कृत्यमाह

**ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ॥**
**आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥**

तेत्विति ॥ देवक्यादिभिः प्रार्थिता अपि तत्प्रार्थनां न कृतवन्त इतिज्ञापनार्थस्तुशब्दः ॥ तूर्णमिति मध्ये कृत्यान्तरव्यावृत्त्यर्थम् । दूरात्कथने निलायनादिकं संभविष्यतीति तन्निवृत्त्यर्थमुपव्रज्येत्युक्तम् । देवक्या गर्भस्य जन्म, न तु पुत्रः, कन्यका चेति भेदः ॥ तद् अतिप्रसिद्धमष्टमम् ॥ अकथनेऽनिष्टं करिष्यतीति ज्ञापनार्थं, भोजराजायेत्युक्तम् । जन्म च प्रतीक्षत एव, कदा भविष्यतीति । अर्थादेतादृशाय । प्रतीक्षायां हेतुमाह ॥ उद्विग्न इति ॥ २ ॥

**स तल्पात्तूर्णमुत्थाय कालोऽयमिति विह्वलः ॥**
**सूतिगृहमगात्तूर्णं प्रस्खलन् मुक्तमूर्द्धजः ॥ ३ ॥**

ततः कंसस्य कृत्यमाह ॥ सोऽपि शय्यायां पतित एव स्थितः स महानपि तल्पाच्छय्यातस्तूर्णमविचारेण प्रथमत उत्थितः पश्चात् कालोऽयमिति विह्वलः । अतः परं जीवनसंभावना नास्तीति निश्चयात् । अयं भगवानेव कालो मृत्युदः । विह्वलः सर्वावयवविकलः । सूतीगृहं प्रसूतिस्थानम् । शीघ्रमिति सर्वकार्यपरित्यागे सर्वसाधनाननुसंधाने हेतुः । प्रस्खलन्निति मार्गाज्ञानं, मुक्तमूर्द्धज इति देहाज्ञानम् ॥ ३ ॥

दृष्ट्वा लिङ्गमज्ञात्वा पुत्रबुद्ध्यैव मारणार्थं प्रवृत्तौ यशोदायाः

कन्याया मारणं स्वपुत्रमारणादप्यधिकदुःखदं जातमिति ज्ञापयितुं तस्या वाक्यमाह—

**तमाह भ्रातरं देवी कृपणा करुणं सती ॥**
**स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ॥ ४ ॥**

तमाहेति, त्रिभिः ॥ त्वदीया कन्यका चेयमतो मह्यं प्रदीयताम् * भगिनी दानपात्रं हि हेतुकार्य फलैस्त्रिभिः ॥ तं कंसं भ्रातरमाहायतो देवी सात्त्विक्यपि स्त्री ज्ञात्वा वा दैन्यप्रदर्शनाऽर्थं तथा कृतवतीति, असत्यमपि प्राणसंकटे परार्थं वक्तव्यमिति ज्ञापनार्थं वा । कृपणा अनालोचितयाचिका । कृपणः स तु विज्ञेयो योऽनालोचितयाचक इति वाक्यात् । करुणं यथा भवति तथा तमाहेति संबन्धः । सतीति कालज्ञानाद्याचनं सर्वात्मकत्वाद् भगवतस्तथा करिष्यति । भर्त्तुर्दोषानिवृत्त्यर्थं वा सतीति । अन्यथा स्वपुत्रं स्थापयित्वा परकन्यामारणे दोषः स्यात् ॥ स्नुषेति ॥ मातुलकन्यापरिणयनपक्षे पितृष्वसुरपि कन्या परिणेया । यथा मित्रविन्दा । यदा कंसस्य पुत्रो देवकीकन्यामुद्वहेत्तदेयं स्नुषा भवति । अनेन तस्याः स्वकन्यात्वं सहजमित्युक्तम् । ननु पुत्र एव नास्ति कथमियं स्नुषेतिचेत्तत्राह ॥ कल्याणेति ॥ त्वं पुत्रजननसमर्थः । मदपत्यरक्षणेन तवापि पुत्रो भविष्यतीति । अथवा मा स्नुषा, तथापि स्त्रियं हन्तुं मार्हसि । अन्यथा अहमेव कथं न हता । स्त्रियाः स्वसुर्गुरुमत्या वधोऽयमिति यतस्त्वयैव निरूपितम् ॥ ४ ॥

अष्टमो मारणीय इतिचेत्तत्राह—

**बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ॥**
**त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयताम् ॥ ५ ॥**

बहवो हिंसिता भ्रातरिति ॥ स्त्रिया मारकत्वं शास्त्रे न सिद्धम्। पुत्रास्तु हता एव। यद्यप्येक एव मारणीयः,तत्स्थाने बहवो हताः । भ्रातरिति संबोधनं दयार्थम् । आकृत्या पराक्रमोऽपि तेषु संभाव्यत इति तदर्थमाह ॥ पावकोपमा इति ॥ स्नेहे त्यक्ष्यतीति । तस्य दोषाभावमाह॥ त्वया दैवनिसृष्टेनेति ॥ अनुरक्तो गुणान् ब्रूत इति वाक्याद्दैवेन भगवदिच्छया प्रेरितेन भवता पुत्रा हताः। एषा तु अवध्येति दैवेन न प्रेर्यत इति भावः। एका इयं पुत्रिका अभ्रातृमतीति इमामप्यन्ततोगत्वा पुत्रिकाधर्मेण दत्वा ससन्ताना भविष्यामीति ज्ञापयति ॥ एकेति, यद्यपरा उत्पत्स्यते तदा मारणीयेति ज्ञापितम् । प्रकर्षेण दीयतामिति कालान्तरेऽप्यमारणीया ॥ ५ ॥

अवश्यं दाने हेतुमाह—

**नन्वहं ते ह्यवरजा दीना हतसुता प्रभो ॥**
**दातुमर्हसि मन्दाया अङ्गेमां चरमां प्रजाम् ॥ ६ ॥**

नन्वहमिति ॥ अवश्यदानमेव फलम् । नन्विति संबोधनं युक्तिग्रहणार्थम् ॥ अहं ते ह्यवरजेति ॥ अवरजत्वे उभयानुभवः प्रमाणम्,अवरजा दयापात्रम् । दीना दुःखिता शोकादिना तत्र हेतुः, हतसुतेति ॥ प्रभो इति संबोधनं, दानसामर्थ्यद्योतनार्थम् । अत एव दातुमर्हसि ॥ मन्दाया इति ॥ अतः परं रजोऽभावः सूचितः । अतश्चरमां प्रजाम् ॥ इमामिति ॥ अन्या कन्यात्वेन न देया, इयमेव देयेति ॥ ६ ॥

तथापि न त्यक्तवानित्याह—

**उपगृह्यात्मजामेवं रुदन्त्या दीनदीनवत् ॥**
**याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥७॥**

उपगूह्येति ॥ एवमात्मजामुपगूह्य विलापनपूर्वकं रुदन्त्या हस्तात् तां बालामाचिच्छिदे । देवकीं विनिर्भर्त्स्य । विनिर्भर्त्सने हेतुः, तां याचितः सन् ॥ आत्मजामिति ॥ आत्मनो भगवतः सकाशाज्जाताम् ॥ व्यवहारे शब्दाः परमार्था एवेति न्यायाद्देहादावात्मशब्दवद् आत्मजशब्दोऽपि पुत्रत्वेन परिग्रहमात्रत्वेऽपि वक्तुं शक्यते ॥ एवमिति पदादेतानीदृशानि वाक्यानि बहुवारमुक्तानीति ज्ञापितम् । रोदनं यशोदाकन्यकेति, दीनादपि दीना । यथा दैवहता पुत्रभर्त्रादिरहिता व्याधिग्रस्ताऽपि भवति सा दीनदीना तथेयं स्वपुत्रनाशं दृष्टवती परापत्यनाशमपि पश्यतीति ॥ हस्तादिति ॥ एकेन हस्तेन तस्या एकं हस्तं धृत्वा द्वितीयेन तस्या द्वितीयहस्तादाचिच्छिदे । एवं करणे हेतुः, खल इति ॥ ७ ॥ ❀ ॥ ❀ ॥ गृहीत्वा यत् कृतवाँस्तदाह—

**तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सुताम् ॥**
**अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥**

तां गृहीत्वेति ॥ चरणयोरिति मारणार्थमेव विपरीततया ग्रहणमात्रेणैव तस्या नाशः सूचितः ॥ जातमात्रामिति ॥ नालादिसहिताम् । अतिकोमलत्वप्रदर्शनेन तस्य खलत्वं समर्थितम् । स्वसुः सुतामिति सर्वथा विरुद्धकर्तृत्वमुक्तम् । अपोथयत् प्रक्षाल्यमानवस्त्रमिव प्रक्षिप्तवान् । शिला अङ्गणस्था यथा स्नानार्था भवति । ननु सौहार्दमुभयविषयकं कथं त्यक्तवानित्याह ॥ स्वार्थोन्मूलितसौहृद इति ॥ स्वार्थमुन्मूलितं सौहृदं येन ॥ ८ ॥

ततो यज्जातं तदाह—

**सा तद्धस्तात् समुत्पत्य सद्यो देव्यम्बरं गता ॥**
**अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥**

सा तद्धस्तादिति ॥ यदैव पाषाणं प्रति प्रक्षिप्तवाँस्तदैव हस्तात् सम्यगुत्पत्य उत्पतनं कृत्वा सद्य एव सा देवतारूपा जाता । ततोऽम्बरं गता आकाशे श्येनवत् स्थिता । कंसादिभिः सर्वैरेव तथाऽदृश्यत । तस्यास्तथात्वे सामर्थ्यं विष्णोरनुजेति ॥ यशोदा देवकी परस्परविचारेणैकैव । पश्चाच्च ज्ञाता । यदि वा भगवान् यशोदासुतो, यदिवा देवाक्याः, उभयथापि सा अनुजा लोकप्रसिद्धेः । विष्णोरनुजात्वेन तथा सामर्थ्यं ज्ञापितम् । द्विगुणं रूपमाह ॥ सायुधाष्टमहाभुजेति ॥ भगवत्कार्यं स्वकार्यं च करिष्यतीत्यष्टभुजत्वम् । भगवत्कार्यं देवक्यादीनां बन्धनिवृत्तिः, स्वकार्यं सर्वेषां दुःखदानं धर्मनाशश्च । भगवत्कृतिसिद्ध्यर्थमायुधसहिता ॥ अष्टौ महाभुजा यस्याः । यथा भगवान् आविर्भावे विपरीतं रूपं प्रदर्शितवान् एवमियमपि ॥ ९ ॥

आविर्भावादिदानीं रूपान्तरं गृहीतवतीति तस्याः सामग्रीमाह—

दिव्यस्रगम्बरालेपरत्नाभरणभूषिता ॥
धनुःशूलेषुचर्मासिशङ्खचक्रगदाधरा ॥ १० ॥

दिव्येति ॥ दिव्याः स्रजो मालाः, अम्बराणि वस्त्राणि दिव्यान्येव आलेपश्चन्दनादिः । रत्नयुक्तान्याभरणानि च । एवमलङ्करणचतुष्टयसहिता । दर्शनकृतोऽयं क्रमः । प्रथमतो गन्धाददृष्टाया अपि स्रजा प्रतीतिः, ततो वस्त्राणां, ततश्चन्दनाऽऽभरणानामिति । आयुधानि गणयति ॥ धनुरिति॥ धनुर्वामभागहस्ते, शूलमिषुश्च दक्षिणयोः । चर्मवामे, असिर्दक्षिणे, शङ्खो वामे, चक्रं दक्षिणे, गदा वामे इति गदान्तानि बिभर्तीति गदाधरा ॥ १० ॥

तस्याः स्वरूपं भगवत इव सर्वजनीनामिति ज्ञापयितुमाह—

सिद्धचारणगन्धर्वैरप्सरःकिन्नरोरगैः ॥
उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥

सिद्धचारणेति ॥ सिद्धचारणगन्धर्वास्त्रिगुणाः । अन्ये च । अप्सरैरिति, बहुलं छन्दसीत्यनेन । ऐकपद्यं तु सुगमम् । अस्याः षड्गुणोपजीवका एते । कंसदर्शन एव उपाहृता उरु-बलयः पूजासाधनानि यैः । बलिशब्दो जयजयादिशब्दाना-मप्युपलक्षकः । अतस्तैः स्तूयमाना, कंसवधं कर्त्तुं शक्ताहमिति ज्ञापयन्ती इदं वक्ष्यमाणमब्रवीत् ॥ ११ ॥

द्वयमत्र वक्तव्यं, कथं न हन्यते, कथं वा रक्षार्थं न स्थीयत इत्युभयसमाधानम् । तदाह—

देव्युवाच ॥

किं मया हतया मन्द जातः खलु तवान्तकृत् ॥
यत्र क्वचित् पूर्वशत्रुर्मा हिंसीः कृपणां वृथा ॥ १२ ॥

किं मयेति ॥ मया हतया किम् । अहं तु हननेऽप्यपकारं न करोमि, किं पुनरहता । अत एतद्वृत्तान्ताज्ञानात् त्वं मन्दः । अवधे हेतुः, जातः खलु तवान्तकृदिति ॥ यस्तु तवान्तं नाशं करिष्यति स तु जात एव क्वचित् । यत्रक्वचिदिति विशेषाकथनं देवगुह्यम् । ननु शत्रुत्वाविशेषेऽपि सामर्थ्ये विद्यमानेऽपि यद् भगवतैव हन्यते, न त्वयेति को विशेष इतिचेत् तत्राह ॥ पूर्वशत्रु-रिति ॥ मम त्विदानीं भवाञ्छत्रुः, तदप्यन्यबुद्ध्या । भगवांस्तु भवतः पूर्वशत्रुरतस्तेनैव हन्तव्यः । आकाशवाण्याऽपि तथैवोक्त-म् । अतः कृपणां देवकीं मा हिंसीः । तस्या वधे न कोऽपि पुरुषार्थः सिद्ध्येत् । अतो वृथैव मा हिंसीः ॥ १२ ॥

एवमुक्त्वा गतेत्याह—

**श्रीशुक उवाच ॥**

**इति प्रभाष्य तं देवी माया भगवती भुवि ॥**
**बहुनामनिकेतेषु बहुनामा बभूव ह ॥ १३ ॥**

इतीति ॥ प्रकर्षेण भाषित्वा स्पष्टतया निरूप्य । अनेन संवादान्तरमपि कंसेन सह कृतवतीति लक्ष्यते । अन्यथा ब्राह्मणैः सह विरोधं न कुर्यात् । तेन सह संवादेनैव कार्यं सर्वं सिद्धमिति ज्ञातवतीत्यत्र हेतुमाह ॥ देवीति ॥ यद्यन्योऽप्यागत्य स्पष्टमन्यथा वदेत् तथापि तया मोहितः कंसो नान्यदङ्गीकुर्या-दित्यत्र हेतुमाह ॥ मायेति ॥ तस्या गमने हेतुमाह ॥ भगवती-ति ॥ सा हि भगवद्भावप्राकट्यं कृत्वा लोके पूजां प्राप्स्यतीति भगवद्वाक्यानुसारेण बहुनामनिकेतेषु भूमौ यावन्ति स्थानानि यन्नामानि तत्र सर्वत्रैव स्थिता बहूनि रूपाणि कृत्वा बहुनामा बभूव । दुर्गादिमूर्तिषु रूपभेदस्य स्पष्टत्वाद्देवकीवसुदेवयोर्निबन्धो व्यर्थः ॥ १३ ॥

शत्रुस्तु जात इति मायावचनं श्रुत्वा कंसः किं कृतवानि-त्याकाङ्क्षायामाह—

**तया कथितमाकर्ण्य कंसः परमविस्मितः ॥**
**देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् ॥ १४ ॥**

तयेति ॥ वाक्यं तु भगवत्सम्बन्धि । तया तु परं केवल-मभिहितम् । तदाकर्ण्य परमविस्मयं प्राप्तवान् । यदीयं देवता ज्ञायेत धृत्वैव स्थाप्येत । तद्वाक्यविश्वासाद्देवकीं वसुदेवं च विमुच्य शृङ्खलां दूरीकृत्य देवीवाक्यादुत्पन्नशुद्धभावः प्रश्रितो विनीतोऽब्रवीत् । कायिकं मानसं च शुद्धभावं प्रदर्श्य वाचिकं प्रदर्शितवानित्यर्थः ॥ १४ ॥ ❀ ॥ ❀ ॥ तस्य वाक्यान्याह—

कंस उवाच ॥

अहो भगिन्यहो भाम मया वां बत पाप्मना ॥
पुरुषाद इवाऽभ्येत्य बहवो हिंसिताः सुताः ॥ १५॥

अहो इत्यष्टभिः ॥ स्वापराधस्य कथनं फलस्यापि च कीर्त्तनम् * भ्रमाच्चैवापराधोऽयं शोकदूरीकृतिस्तथा ॥ एवं चतुर्भिर्लोकोक्त्या शोकाभावो निरूपितः * तत्त्वावबोधनेनापि चतुर्भिः शोकनाशनम् ॥ आत्मनो न हि शोकोऽस्ति ज्ञानादृष्टश्च नश्यति * अतः शोको न कर्त्तव्यः कर्माज्ञानवशो यतः॥प्रथमतः स्वापराधकीर्त्तनेन क्षमापयति ॥ अहो इत्याश्चर्येण सम्बोधनम् । आश्चर्याविष्टस्तथैवागत्य देवकीं वसुदेवं च पृथक् प्रार्थयते ॥ अहो इति पृथग्वचनम् । भामस्तु भगिनीपतिः । सम्बन्धेन सम्बोधनं स्नेहार्थम् ॥ वां युवयोः ॥ पापस्य स्वस्य च भेदाभावं वदन्नाह ॥ पाप्मनेति ॥ बतेति खेदे । पश्चात्तापेन वदामीति ज्ञापयति । न त्विदं प्रतारणार्थम् । पुरुषादो राक्षसः । स हि भक्षणार्थं बालकान् नयति । तथा मया स्वदेहरक्षाभ्रमाद् युवयोर्बहवः सुता विहिंसिताः । राक्षसानां सम्बन्धाद्यपेक्षा शास्त्रापेक्षा च नास्ति, किन्तु प्राणरक्षार्थमेव सर्वेषां सर्वपुरुषार्थसाधकानि अपत्यानि भक्षयन्ति,तथा मया मारिता इति तुल्यता । ततोऽपि विशेषस्तु बहव इत्यनेन ज्ञापितः ॥ १५ ॥

एवमपराधस्य फलमपि संभावयति—

स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत् खलः ॥
काँल्लोकान् संगमिष्यामि ब्रह्महेव मृतः श्वसन् ॥१६॥

स त्वहमिति॥ दैत्यावेशात् कृतं, स्वतस्त्वं समीचीन इति न तत्र नरकसंभावनेत्याशङ्क्य तुशब्दस्तं पक्षं व्यावर्त्तयति । मया

कृतमिति य एव मन्यते स एव तत्फलं प्राप्नोतीति । यतः सोऽह-म् । जिघांसन्तं जिघांसीयादिति वाक्यात् तत्र को दोष इतिचेत् तत्राह ॥ त्यक्तकारुण्य इति॥प्रथमतो ये हतास्ते तु न जिघांसवो भवन्ति तथा त्वं वा । यदा ते मारयितुमायान्ति समर्था वा तदैव वध्याः,न तु बालका दीनाः । अतो येषु कारुण्यं कर्त्तव्यं बालकेषु भागिनेयेषु तेषु न कृतमिति त्यक्तकारुण्यः । ननु संभावनयापि शत्रवो मार्यन्ते,शत्रुपुत्राश्च । अतो राज्ञां संभवानया-ऽपि वधो नदोषायेतिचेत् तत्राह ॥ त्यक्तज्ञातिसुहृदिति ॥ त्यक्ता ज्ञातयः सुहृदो मित्राणि च येन । नन्वाऽऽत्मघातकाः सर्व एव वध्याः । भ्राताऽपि भ्रातरं हन्यादिति तत्राह ॥ खल इति ॥ मयैव परं ते मारिताः, न तु तैरहम् । अतोऽहमेव खलो वृथैव परघातकः । अतो दुष्टकर्मणः कृतत्वात् कान् लोकान् संगमिष्या-मि । ननु सिद्धा एव तामिस्रादयो घातकानां ये, तत्राह ॥ ब्रह्महेवेति ॥ ननु, ब्रह्मह्रा पच्यते घोरे पुनरावृत्तिवर्जिते इति वाक्यात् कः सन्देह इतिचेन्न । प्रायश्चित्तस्य करिष्यमाणत्वाद्द् वधजनितो दोषो न भविष्यति, परं महतामपचारात् प्रायश्चित्तं दुर्बलं न वेति सन्देहादेवं वचनम् । ननु प्रायश्चित्ते नास्त्येव नरकः, कथं सन्देह इतिचेत् तत्राह ॥ मृतः श्वसन्निति ॥ अयं पुरुषः श्वसन्नेव मृतः । अपकीर्त्तेर्जातत्वात् । अतो ज्ञायते यदि पापं गच्छेत्तदा तद्भावः सर्वजनीनः स्यात्, सर्वात्मकत्वाद्भगवतः । अतो मृतः श्वसन् यतो वर्त्ते । प्रायश्चित्तशास्त्रस्य च प्रामाण्यात् सन्देहकथनम् ॥ १६ ॥ ❀ ॥ एवं सम्भावनया फलं निरूप्य अयं मम सहजदोषो न भवतीति स्वदोषपरिहारं वदन्निवाह—

दैवमप्यनृतं वक्ति न मर्त्या एव केवलम् ॥
यद्विश्रम्भादहं पापः स्वसुर्निहतवाञ्छिशून् ॥ १७॥

दैवमप्यनृतं वक्तीति ॥ आकाशवाणी दैवम् । अस्या-स्त्वामष्टमो गर्भ इति वाक्यं, दुर्गापि देवता । एकं तु प्रत्यक्ष-संवादि । आकाशवाण्यास्तु वाक्यं विसंवादि । देवगुह्याज्ञाना-देवं वचनम् । मर्त्येष्वनृतं प्रतिष्ठितमिति वाक्यात् । मनुष्याणा-मनृतं दैवेषु सत्यम् । तदत्र विपरीतम् । न केवलं मर्त्या एवा-ऽनृतवादिनः, किन्तु दैवमप्यनृतं वक्ति । अतो यद्विश्रम्भाद् यद्वाक्यविश्वासात् स्वसुः सुतान् वृथैव निहतवान् । ननु सन्देहे प्रमाणमन्तःकरणप्रवृत्तय इति तद्हृदये कथं भातमितिचेत्तत्रा-ह ॥ अहं पाप इति ॥ महतां हि हृदयं प्रमाणं, न तु पापनिष्ठा-नाम् ॥ शिशूनिति वयःसंख्ये विरुद्धे निरूपिते ॥ अष्टम एक एव हन्तेति सामर्थ्यप्रतिपादकवाक्यात् ॥ १७ ॥

नन्वतः परं किं कर्त्तव्यमित्याशङ्क्याह—

**मा शोचतं महाभागावात्मजान् स्वकृतम्भुजः ॥**
**जन्तवो न सदैकत्र दैवाधीनाः सदासते ॥ १८ ॥**

मा शोचतमिति ॥ महतां शोके हेतुभूतः प्रायश्चित्तेऽप्य-ऽनधिकारी भवतीति मत्कृपया शोको न कर्त्तव्यः । नन्वपका-रिणि कथं कृपेतिचेत् तत्राह ॥ महाभागाविति, सम्बोधनम् ॥ महतां शत्रुमित्रोदासीनभावो नास्ति । ननु महत्त्वादेव शोका-ऽभावे सिद्धे कथं शोकाभावो बोध्यत इतिचेत्तत्राह ॥ स्वात्मजा-निति ॥ न हि स्वाकृतार्थत्वेन शोकः, किन्तु बाला अकृतार्था गता इति । तेषां शोकाविषयत्वे हेतुमाह ॥ स्वकृतम्भुज इति ॥ यद्यपि मरीचिपुत्रा एवं जाता इति न जानाति, तथापि कार्या-दनुमिनोति । अतस्तैरपि तादृशं कर्मकृतमस्ति, येन बाला एव हताः । ननु न वयं ताञ्छोचामो, नात्मानं, किन्तु एकत्र

उभयेषां स्थितिर्नाभूदिति शोचाम इतिचेत्तत्राह ॥ जन्तव इति ॥ ये हि निरन्तरं जायन्ते, जायस्व म्रियस्वेतिमार्गवर्त्तिनः, ते सदैव एकत्र नासते । यतो भगवदिच्छा तथैव तेषु । तदाह ॥ दैवाऽधीना इति ॥ यदापि तिष्ठन्ति तदापि पूर्ववासनया शत्रुमित्रोदासीनत्वस्य नित्यत्वान्न सम्यगासते । सहासत इति वा पाठः ॥ १८ ॥

एवं लौकिकन्यायेन स्वापराधाभावं प्रार्थयञ्छोकापनोदनं कृतवान् । पुनःशास्त्रानुसारेणापि शोकापनोदनमाह, चतुर्भिः—

भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च ॥
नाऽयमात्मा तथैतेषु विपर्येति यथैव भूः ॥ १९ ॥

भुवीति ॥ पूर्वं ते म्रियन्तइत्यङ्गीकृत्य शोकापनोद उक्तः । इदानीं ते न म्रियन्त एवेत्युच्यते ॥ आत्मा, नित्यः सर्वगतः स्थाणुरिति वाक्याद् व्यापको गमनागमनादिशून्यः कूटस्थः । सांख्यानामेवमेव मतं दैत्यानां हृदये समायातीति तदेवोच्यते ॥ देहास्तु आकाशे अभ्रतमःप्रकाशा इव उच्चावचाः समायान्ति गच्छन्ति च, न त्वाकाशे कश्चन विकार उत्पद्यते । तथा पुत्राणामप्यात्मत्वात् तेषां देहे गते न काचित् क्षतिः, स्पष्टतया व्यवहार्यत्वाद् भूमिदृष्टान्तो बुद्ध्यत इति तमाह ॥ यथा भौमानि भूविकाराणि भूतानि कृमिकीटादीनि वृक्षादीनि वा यथा यान्ति भूमेः सकाशादुत्पद्यन्ते पृथग् भवन्ति अपयान्ति च, भूमावेव लयं प्राप्नुवन्ति, तेषु उद्गतेषु लीनेषु वा । भूमिस्तु न विक्रियते । यथा आत्मन्यपि देहा यान्त्यपयान्ति च ॥ आत्मोपार्जितकर्मवशादेव उत्पद्यन्ते लीयन्ते च । तथापि आत्मा न वा उत्पद्यते, न वा लीयत इत्यर्थः । यथा भूस्तथा देहानामपि भौतिकत्वान्न पृथग्

निरूपणम् । भुवि भौमानि भित्त्यादीनीत्येव सम्बद्ध्यते । भूतानीति त्वात्मनीति वा ॥ भूतानि जातानि वा । तेष्वेव भूतेषु विद्यमान आत्मा न तथेति वक्तुं दृष्टान्त एव प्रवेश उक्तः । यथा बहिः स्थिता पृथिवी न विक्रियते, एवमन्तःस्थित आत्माऽपि । तथैतेष्विति भिन्नं वाक्यम् । एतेषु मनुष्यदेहेष्वपि आत्मा न विक्रियत इति । एतेषु मनुष्यादिदेहेषु भूम्यविकारः प्रत्यक्षसिद्धम् । वर्षाकालोद्भवेषु तृणादिषु च । आत्माविकारश्च प्रत्यक्ष-

---

ननु भुवि भौमानि यथा यान्त्यपयान्ति तथात्मा न याति नापयातीत्येतावतैव वाच्योऽर्थः सम्पद्यत इत्यन्यानि पदानि व्यर्थानि । किञ्च, यथा भूर्न विक्रियत इति द्वितीयो दृष्टान्तो बाधितः। भौमानां भूविकारत्वादित्यऽरुच्या पक्षान्तरमाहुः ॥ भुवि भौमानि भित्यानीत्यादि ॥ भुवि भौमानि भित्यादीनि यथा यान्त्यपयान्ति च । भूतान्यबादीनि च यान्त्यपयान्ति । आत्मा त्वेतेषु भूतेषु विद्यमान एव नतथा । न याति नापयातीत्यर्थः । एतेन भूतानीतिपदस्यात्मनि सम्बन्धे प्रकार उक्तः । यद्यप्येवमपि भूतपदमेतेष्वित्यादिपदानि च न सार्थकानि भवन्ति, तथापि तेषु विद्यमानस्यापि तद्धर्मासंबन्धकथनात्तथात्वम् । अन्यथैतदर्थाप्राप्तेः ॥ दृष्टान्त एवेति ॥ दृष्टान्तनिरूपकवाक्ये भूतपदस्यापि प्रवेश उक्त इत्यर्थः । अतः परं, यथा भूरिति दृष्टान्तं विवृण्वन्ति ॥ यथा बहिरित्यादिना ॥ भौमानि यदा विक्रियन्ते तदा तेभ्यो बहिःस्थिता स्थूला भूर्न विक्रियते, तथैतेष्वन्तःस्थित आत्माऽपि तथा । एवं सति न तथैतेष्वित्यस्यावृत्तिः कार्या । तदेतदुक्तं, तथैतेष्विति भिन्नं वाक्यमित्यनेन ॥ अस्मिन्नेव पक्षे, एतेष्वित्यादिपदानि प्रकारान्तरेण व्याकुर्वन्ति ॥ एतेषु मनुष्यदेहेष्वपीत्यादिना ॥ यथा बहिःस्थिता भूर्मनुष्यदेहेषूत्पद्यमानेषु न विक्रियते तथात्मापीत्यर्थः॥ अग्रे तूक्तेऽर्थे प्रमाणमुक्तम्– एतेष्वित्यादिना ॥ अथ प्रकारान्तरेणार्थमाहुः ॥ वर्षाकालेत्यादिना॥ एतेषु तृणादिषूत्पद्यमानेषु यथा भूर्विक्रियते, न तथा तदन्तर्गत आत्मेत्यर्थः । व्यतिरेकेऽत्र दृष्टान्तः । यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरमिति श्रुतेः पृथिव्यन्तर्गतोऽभिमान्यात्मा-

सिद्धः । अन्यथा आत्मानन्त्यकल्पना प्रसज्ज्येत । यथा देहे लोमानि न पृथगात्माधिष्ठितानि । तथा भूमावप्येक एवात्मा तत्संबन्धात् कोटिशस्तृणादीन्युत्पद्यन्ते विलीयन्ते च। अधिष्ठात्र्यो देवतास्तु भिन्नाः ॥ १९ ॥

नन्वेवमैकात्म्ये कथं लोके भेदव्यवहार इतिचेत्तत्राह—

**यथाऽनेवंविदो भेदो यत आत्मविपर्ययः ॥**
**देहयोगवियोगौ च संसृतिर्न निवर्तते ॥ २० ॥**

यथेति ॥ यथा यथावदनेवंविदो भेदो, नत्वेवंविदः। आपातत एवंवित्त्वेऽपि भेदप्रतीतिर्न गच्छतीति यथेत्युक्तम् । यथाऽनेवंविद इत्येकं पदम् । समासान्तस्त्वनित्यः ॥ भेदस्तु द्वित्वसाध्यः । न ह्येकास्मिन् भेदबुद्धिर्भवति । द्वित्वं त्वपेक्षाबुद्धिजन्यम् । अतो द्वित्वं न वस्तुनिष्ठं, किन्तु बुद्धिस्थविषयकमेव । बुद्ध्या बहिर्विषयोत्पादनासम्भवात् । अतः, अज्ञानकृत एव भेदो भवति । अपेक्षाविषयाणामभावात् । निरपेक्षेष्वपेक्षाबुद्धिरज्ञानकृतैव । ननु भेदः, पारमार्थिकः, श्रुतिस्मृतिव्यवहारोपयोगित्वात् । आत्मवदिति अनुमानाद् भेदः पारमार्थिक एवेतिचेत्तत्राह ॥ यत आत्मविपर्यय इति ॥ भेदः पारमार्थिकः स्यात् तत्कृतेन व्यवहारेण आत्मविपर्ययो न स्यात् । अज्ञानस्य भेदोत्पादकत्वेनैवान्यथाबुद्धिहेतुत्वात् । अन्यथा सुषुप्तावज्ञानस्य

---

ऽस्तीति मन्तव्यम् । विपक्षे बाधकमाहुः॥अन्यथेति ॥ एकतृणरूपेण एकस्यात्मनो विकृतौ सत्यां निरवयवत्वेनांशभेदस्य वक्तुमशक्यत्वाद्द्वितीयादिषु तेषु भिन्नो भिन्न आत्माङ्गीकार्यः स्यादित्येकस्मिन् पृथिवीलक्षणशरीरेऽनन्ता आत्मानः कल्पनीयाः स्युरित्यर्थः॥ अधिष्ठात्र्य इति ॥ त्वगादिगोलकेषु लोमादीनामिन्द्रियाणामोषध्यादयो देवताः शरीरभिमान्यात्मनः सकाशाद्भिन्ना इत्यर्थः ॥

विद्यमानत्वादन्यथा बुद्धिर्भवेत् । किञ्च न केवलं विपर्ययमात्रजनकत्वं, किन्तु देहवियोगावपि भेदकृतावेव । यथा देवदत्तस्य यज्ञदत्तदेहे जाते गते वा स्वस्य न कापि विक्रियोत्पद्यते । एवं स्वस्याप्यात्मन एकत्वे ज्ञाते नोत्पद्येत । चकारस्तु सर्वव्यवहारसमुच्चयार्थः । किञ्च भेदस्त्वपारमार्थिक इति कार्यान्तरादप्यऽवसीयते । तदाह । संसृतिर्न निवर्त्तेत इति ॥ भेदज्ञाने विद्यमाने जन्ममरणयोर्विद्यमानत्वात् संसारो न निवर्त्तते ॥ अत आत्मनः अविकृतत्वं ज्ञातव्यम्।तदविकृतत्वमपरिच्छेदकूटस्थत्वव्यतिरेकेण न सिद्ध्यतीति कूटस्थो व्यापकः अविकृत आत्मा ज्ञातो भवति। तस्मिञ्ज्ञाते शोको न सम्भवति ॥ २० ॥

तत्तु भवद्भ्यां ज्ञायत एवेति शोको न कर्त्तव्य एवेत्याह—

**तस्माद् भद्रे स्वतनयान् मया व्यापादितानपि ॥**
**मानुशोच यतः सर्वः स्वकृतं भुञ्जतेऽवशः ॥ २१ ॥**

तस्मादिति ॥ वसुदेवस्तु शोकं न करिष्यतीति देवकीसंबोधनं, भद्रे इति ॥ अतः परं तव कल्याणमपत्यं च भविष्यतीति ज्ञापितम् ॥ स्वतनयान् देवकीतनयान् माऽनुशोच । प्रथमत आत्मानं शोचति ततः पुत्रमित्यनुपदम्। यद्यपि ते स्वकर्मवशादेव मृताः, न तु मया व्यापादिताः। तत्कर्मैव मां च प्रेरितवत् । अथापि बहिर्दृष्ट्या मयैव व्यापादिता इत्यङ्गीक्रियते, तथाऽपि मा शोचेत्याह ॥ मया व्यापादितानपीति ॥ अनुशोके बहिर्मुखानामप्येकानुपपत्तिः । तामाह ॥ यतः सर्वः स्वकृतं भुञ्जतेऽवश इति । अनिच्छन्नपि परवश एव कर्माधीनो भूत्वा सर्वोऽपि स्वकृतं भुङ्क्ते । अस्य मते न सृष्टेश्चातुर्विध्यम् । भुञ्जत इति बहुवचनप्रयोग एकवचने देहभेदेन भोगेन नानात्वप्रतीतेः सिद्ध-

त्वज्ञापनाय । अनेन मयापि बहिर्मुखत्वेन कृतं कर्म भोक्तव्यमित्यविचारितोऽपि दण्डो भविष्यतीति दण्डाभावेनापि चिन्ता न कर्त्तव्या ॥ २१ ॥ ❀ ॥ ❀ ॥ ननु त्वया ज्ञानमुपदिष्टम् । उपदेष्टुर्दृढं ज्ञानं भवतीति न तत्र दण्डसंभावनेतिचेत्तत्राह—

**यावद्धतोऽस्मि हन्ताऽस्मीत्यात्मानं मन्यतेऽस्वदृक् ॥**
**तावत्तदभिमाऽन्यज्ञो बाध्यबाधकतामियात् ॥ २२ ॥**

यावदिति ॥ यावदयं जीवः शास्त्रोत्पन्नज्ञानोऽपि हतोऽस्मि हन्तास्मीति आत्मनः कर्मत्वं कर्तृत्वं वा मन्यते तावद्बाध्यबाधकतामियादेव । कर्मत्वे बाधकत्वमिति । अक्रिय आत्मनि यथैव क्रियां मन्यते तथैव क्रियां प्राप्नोतीत्यर्थः । नन्वविद्यमानधर्मप्रतीतौ को हेतुस्तत्राह ॥ अस्वदृगिति ॥ न स्वस्मिन् दृष्टिर्यस्य । शास्त्रज्ञानं शास्त्रीयत्वेनैव जानाति, न तु स्वविषयत्वेन । ततोऽपि किमत आह ॥ तावत्तदभिमानी भवतीति ॥ स्वरूपे ज्ञाते देहाद्यध्यासो न भवति । अध्यासे पुनः स्वरूपाज्ञानमिति तदभिमानी अज्ञ एव भवति । अतो बाध्यबाधकभावः ॥ २२ ॥

एवं भवद्बालकानामस्माकं च कर्मवशात् सर्वं जातं भविष्यति च । अतः शोको दण्डो वा न चिन्तनीयः । परमतिक्रमदोषो मदीयः सोढव्य इति वदन् क्षमापनार्थं नमस्कारं करोति—

**क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः ॥**
**इत्युक्त्वाश्रुमुखःपादौश्यालःस्वस्त्रोस्तदाग्रहीत्॥२३॥**

क्षमध्वमिति ॥ मम दौरात्म्यं क्षमध्वम् । अविचारेण अन्यायकर्त्ता दुरात्मा । अत आज्ञोल्लङ्घनं पुत्रमारणादिकं च यत् कृतं तत् सर्वं क्षमध्वम् । महतां हृदये अनुशये स्थिते शोको भूयान् भवति । क्षमापनार्थं न किञ्चिद्दातव्यम् । यतः साधवो

दीनेषु वत्सलाः । मम च दीनत्वमपकीर्त्तिनरकभोक्तृत्वेन । स्वस्य दैन्यं न केवलं वचनेन निरूपितं, किन्तु रूपेणापि तद-ऽभिव्यक्तिं कृतवानित्याह ॥ इत्युक्त्वा अश्रुमुखो, जात इति ॥ अश्रूणि मुखे यस्य । विकलत्वात् प्रोञ्च्छनमपि न करोति । यद्ययम् अकर्तव्यमपि कनिष्ठभगिन्याः पादग्रहणं करोति, तदान्यत् किं न कुर्याद् गृहीतधनादिदानं वा अतिरिक्तदानं वा । स्वसृशब्देनैव स्वसृतत्पती अभिधीयेते इति तत्सम्बन्धादेव वसुदेवस्य मान्यत्वात् साक्षात्तं प्रति नमस्कारेऽपि दोषाभावात् एकस्या एव पादौ द्विवद्गृहीतवानिति ज्ञापयितुम् । एकशेष-शास्त्रे, पुमान् स्त्रियेत्यादिसूत्रेषु चतुर्षु तृतीया ज्ञापयति, अप्रधानं न शिष्यत इति । अन्यथा, स्त्रीपुरुषाभ्यामिति प्रयोगो न स्यात्, स्त्रीपुंभ्यामिति च । अत्रापि तद्भर्त्रा सहिता स्वसैवावशिष्यते । अथेति भिन्नप्रक्रमो दैत्यावेशस्य राजसभावस्य च त्यागार्थः॥२३॥

निरोधं च दूरीकृतवानित्याह—

**मोचयामास निगडाद् विस्रब्धः कन्यकागिरा ॥**
**देवकीं वसुदेवं च दर्शयन्नात्मसौहृदम् ॥ २४ ॥**

**मोचयामासेति** ॥ निगडौ स्तम्भबद्धौ । अतो निगडा-न्मोचयामासेत्युक्तम् । अर्थादुभावपि । तत्तु बन्धनागारं भवती-ति न निगडदूरीकरणम् । नन्वेतावक्षुब्धौ, आकाशवाणी च प्रमाणम् । अत एताभ्यामेव किञ्चित् कापट्यं कृतमस्तीति कथं न विचारितवाँस्तत्राह ॥ विस्रब्धः कन्यकागिरेति ॥ कन्यका माया । तस्या वचनमसत्यमपि सम्भाव्यते, तथापि तत्रैव विश्वासं कृतवान्।यत्र क्वचिदिति,कृपणामिति लिङ्गवचने देवक्या दोषाभावसूचके । वसुदेवेनैव तथा कृतत्वात् । अन्यथा स्फूर्त्ति-

कर्तृत्वं तु मायायाः सिद्धमेव । प्रथमतो देवकीं पश्चाद्वसुदेवं चकारात्तत्सम्बन्धिनश्च स्वयं परिचर्यां कुर्वन् आत्मनः सौहृदं च दर्शयञ्जातः ॥ २४ ॥

प्रसादे प्रार्थिते ताभ्यां प्रसादः कृत इत्याह—

भ्रातुः समनुतप्तस्य क्षान्त्वा रोषं च देवकी ॥
व्यसृजद् वसुदेवश्च प्रहस्य तमुवाच ह ॥ २५ ॥

भ्रातुरिति ॥ सम्यगनुतप्तस्य पश्चात्तापेन तप्तस्य तत्रापि भ्रातुः सम्बन्धि रोषं क्षान्त्वा क्षमित्वा क्षान्तरोषा वा तत्कृतं पूर्वापराधं व्यसृजद्, रोषं वा पाठभेदात् । तदीयो रोषः सोढः स्वकीयं तु त्यक्तवती । कृतकार्यस्य तद्रोषस्य सहनम् । अकृतकार्यस्य स्वकीयस्य परित्यागः । एवं वसुदेवश्च । चकारादन्येऽपि । रोषमपराधं च क्षान्त्वा । यतो देवकी देवतारूपा, वसुदेवोऽपि तथा । तस्यास्तु शोकाभावो मुखप्रसादेनैव ज्ञातः । वसुदेवस्तु गूढहृदय इति कदाचिदप्रसन्नो भवेदित्याशङ्क्य हास्यं वचनं चाऽऽह ॥ प्रहस्य तमुवाचेति ॥ हेत्याश्चर्यम् । पुत्रमारकस्त्वसम्भाष्य इति ॥ २५ ॥

तदुक्तं ज्ञानं तस्यैव हृदयारूढं भवत्विति तस्यानुमोदनं करोति—

वसुदेव उवाच ॥

एवमेतन्महाराज यथा वदसि देहिनाम् ॥
अज्ञानप्रभवाहंधीः स्वपरेति भिदा यतः ॥ २६ ॥

एवमेतदिति ॥ महाराजेति सम्बोधनं, मारणस्यादोषज्ञापनार्थम् । यतस्त्वमात्थ । एवमेतत् । तन्निष्पिण्डितमनुवदति । देहिनामज्ञानप्रभवा अहंधीरिति ॥ देहादावहम्बुद्धिरज्ञानादेव जायते । तस्मात् स्वपरेति भिदा स्वः पर इति । एतन्मूलक

एव सर्वोऽपि व्यवहारः ॥ देहिनामिति ॥ देहाध्यासवताम् । अहङ्कारस्याज्ञानजनितत्वे देहाध्यासः प्रयोजक इति अधिकारत्वेन निरूपितः । अन्यथाज्ञानमहम्बुद्धिः । तदज्ञानकृतमन्यथा स्वरूपे भासमाने अन्यत्र भायात् ॥ २६ ॥

एवं तदुक्तं ज्ञानं नित्यानित्यवस्तुविवेकोपयोगित्वेन निरूप्य स्वसिद्धान्तसिद्धं ज्ञानं कृपयोपदिशति—

**शोकहर्षभयद्वेषलोभमोहमदान्विताः ॥**
**मिथोघ्नन्तं न पश्यन्ति भावैर्भावं पृथग्दृशः ॥ २७ ॥**

शोकेति ॥ अत्र वस्तुतः स्वयं न मारयतीति सत्यम् । अस्वतन्त्रत्वात् । किन्तु केनचित् प्रेरितो मारयति । इतोऽपि मुख्यः सिद्धान्तः। भगवानेव सर्वत्र प्रविष्टो मारयतीति शास्त्रम् । तस्य ज्ञाने जीवानां षड्धर्मा बाधका भगवत्प्रतिपक्षाः । शोक ऐश्वर्यस्य । स हि कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्थः । तत्कृतेऽर्थे कथं शोकः । अन्यथा अपेक्षितं स्वांशानामन्यो न नाशयेत् । हर्षश्च प्राप्तौ भवति । तद्भगवतो वीर्ये कालरूपे ज्ञाते न भवेत् । भयं च न भवेद् यदि भगवतो यशो जानीयात् । स ह्ययुक्तं न करिष्यति । अन्यथा यशो न स्यात् । द्वेषश्च न भवेद् लोभश्च, यदि भगवदीयां श्रियं जानीयात्। द्वेषश्च स्त्रीकृतो भवति, लोभश्च धनकृतः । तदुभयं भगवत एवेति न स्वस्य तथा कर्त्तुमुचितम् । ज्ञाने भगवदीये ज्ञाते मोहाभावः प्रसिद्धः । मदस्तु वैराग्याभावात् । सर्वथैवाविरक्तो मत्तो भवति । अतोऽन्योऽन्यं मारयन्तमपि जना न पश्यन्ति । अन्यथा एक एव घातकः स्यात् । नन्वैकात्म्ये कथं वध्यघातकभावो भगवच्छास्त्रे उपपद्यत इतिचेत् तत्राह ॥ भावैर्भावमिति ॥ भवन्तीति भावा धर्माः । बाधकैर्धर्मै-

बाध्या धर्मा एवापोह्यन्ते, नतु धर्मी। ये हि भवन्ति ते नश्यन्तीति। यथा एकस्मिन् वस्त्रे शुक्लादयो धर्मा रञ्जकद्रव्यसंबन्धाद् उत्पद्यन्ते,विलीयन्ते च। परं बलीयस्त्वं नियामकम्। यद्बाधार्थमेव यस्मिन् भावे भगवान् निविशति स तं भावं दूरीकरोतीति भवदादीनां करणत्वमेव, न तु कर्तृत्वम् । न हि करणं क्वचिदुपालभ्यते स्तूयते वा। अदर्शने हेतुः। पृथग्दृश इति॥ करणे सम्बद्ध एव। कर्त्ता करणाच्चेत् पृथग्ज्ञायते करणं वा ततस्तद्देवं बुद्धिर्भवति, न तु सर्वत्राविष्टं भगवन्तं ज्ञातवतः। अतो मत्पुत्रा अपि भगवतैव मारिताः। त्वमऽपि मारणीय इति त्वयापि शोको न कर्त्तव्य इति भावः ॥ २७ ॥

एवं मायाकृतं ज्ञापनं सकार्यं निरूप्य उपसंहरति—

श्रीशुक उवाच ॥

कंस एवं प्रसन्नाभ्यां विशुद्धं परिभाषितः ॥
देवकीवसुदेवाभ्यामनुज्ञातोऽविशद् गृहम् ॥ २८ ॥

कंस इति॥ एवं प्रसन्नाभ्यां स्वसिद्धान्तकथनेन सम्यक्प्रसादो लक्षितः॥ विशुद्धं परिभाषित इति ॥ राजन्निति संबोधनेन तदुक्तानुवादेन च निरूपितौ। एकस्यैव वचनं निरूपितमिति देवक्या अप्रसादशङ्कां वारयितुमुभयोर्ग्रहणम्। अतस्ताभ्यामनुज्ञातः प्रतीकारमकृत्वा गृहमेवाविशत् ॥ २८ ॥

एवं मायाकार्यं भगवत्प्रेरणया कृतं निरूप्य स्वतन्त्रतया तत्कृतं निरूपयितुमाह—

तस्यां रात्र्यां व्यतीतायां कंस आहूय मन्त्रिणः ॥
तेभ्य आचष्ट तत् सर्वं यदुक्तं योगमायया ॥ २९ ॥

तस्यामिति, यावदध्यायपरिसमाप्ति ॥ यदीदं न कुर्याद्

अवध्य एव स्यात् । तच्च देवानामनिष्टमिति । देवतामाया तत्कार्यं कृतवती । असुराणां वा भगवद्रूपा तेषां मुक्त्यर्थं तान् स्वधर्मनिष्ठान् कृत्वा सर्वशास्त्रविरोधिमोक्षं सम्पादयतीति तथा कथा । राजधर्मा हि अनुल्लङ्घनीयाः । यथा पूर्वमविचारेण कृतं तदन्यथा जातमतः परं विचारेण कर्त्तव्यमिति विचार्य मन्त्रिण आहूय विचारार्थं पूर्ववृत्तान्तमुक्तवानित्याह ॥ तस्यामिति ॥ ज्ञानस्य जातत्वात् कार्यस्य विलम्बासहिष्णुत्वाच्च तस्यां रात्र्यां व्यतीतायामित्युक्तम् । मन्त्रिणोऽपि तामसस्य तामसा एवेति तन्नाम्ना ज्ञापितम् । देवक्यादौ विनयो यः कृतः स तु नोक्तः । योगनिद्रया यदुक्तं तत्सर्वमाचष्ट ॥ २९ ॥ ❀ ॥ यथा कंसो विवेकरहितस्तथा तथा तन्मन्त्रिणोऽपि । तेषां दौरात्म्यमाह—

आकर्ण्य भर्तुर्गदितं तमूचुर्देवशात्रवः ॥
देवान् प्रति कृतामर्षा दैतेया नातिकोविदाः ॥ ३० ॥

आकर्ण्येति ॥ भर्त्तुः कंसस्य गदितमाकर्ण्य श्रुत्वा विचार्य च तं प्रत्यूचुः । एतेषां कंसरक्षायां न काऽपि बुद्धिः, किन्तु देवद्वेषकरणे अवसरो जात इति हृष्टा इत्याह ॥ देवशत्रव इति ॥३०॥

प्रथमतः स्वबुद्ध्या निश्चितं प्रतीकारमाहुः—

दैत्या ऊचुः ॥

एवञ्चेत् तर्हि भोजेन्द्र पुरग्रामव्रजादिषु ॥
अनिर्दशान्निर्दशाँश्च हनिष्यामोऽद्य वै शिशून्॥३१॥

एवञ्चेदिति ॥ यदि क्वचिद् बालक एव जातः, स तु मासमध्ये जातो भविष्यतीति । अनिश्चयेऽपि सर्वानेव बालकान् मारयिष्यामः । ते बालकाः पुरस्था ग्रामस्था व्रजस्था वा भवन्तु । तरतमभावनिरूपणार्थं त्रयाणां ग्रहणम् । अस्माकं तु

न विलम्बः । तदाह ॥ अद्येति ॥ राजेन्द्रेति सम्बोधनमाज्ञापनाऽर्थम् । न निर्गतानि दशाहानि येषां ते अनिर्दशा अतिबालकाः निर्दशास्तु अतिक्रान्तदशाहाः । उभयानपि विशेषाऽऽकारेण सर्व एवं वयं हनिष्यामः । अत्र सन्देहो नास्तीति वैशब्दः । दैत्यगृहेष्वपि स्वसम्बन्धिष्वपि जाता हन्तव्या इति । राज्ञा चेद् भगिनीपुत्रा मारिताः, अन्यैरपि स्वकीया अपि मारणीया इति तैर्ज्ञातम् । अन्यथा प्रभुर्न वदेदिति ॥ ३१ ॥

एवं स्वकृत्यमुक्त्वा तस्य भयाभावार्थं तं प्रोत्साहयन्ति—

**किमुद्यमैः करिष्यन्ति देवाः समरभीरवः ॥**
**नित्यमुद्विग्नमनसो ज्याघोषैर्धनुषस्तव ॥ ३२ ॥**

किमुद्यमैरिति षड्भिः ॥ यथा भगवतः षड्गुणास्तथा तव षड्गुणाः ॥ सामर्थ्यं च जयश्चैव दीनत्वं च दया तथा ❋ शत्रूणामल्पता चैव राजनीतिस्तथैव च ॥ यदि बालका हन्यन्ते अन्यमुपायं करिष्यन्ति देवा इत्याशङ्क्याहुः ॥ किमुद्यमैरिति ॥ उद्यममात्रं तेषां, न तु क्रियासामर्थ्यम् । यतः समरे भीरवः । सङ्ग्रामं दृष्ट्वैव बिभ्यति । तथा भये तेषां निमित्तमाह ॥ नित्यमुद्विग्नमनस इति ॥ अयं हि दिग्विजये सर्वानेव मारितवान् । इन्द्रोऽपि भीतः पलायितः । ब्रह्मादयोऽपि लीनाः । धृत्वा च देवान् यातनां प्रापयति । अतो यद्यन्यार्थमपि धनुष्टङ्कारं कुर्यात् तथापि देवा उद्विग्नमनसो भवन्तीति नित्यमुद्विग्नमनसः । तवेति संमत्यर्थं निरूपितम् ॥ ३२ ॥

धनुष्टङ्कारमात्रेणैव उद्वेगे पूर्ववृत्तान्तं हेतुत्वेनाह—

**अस्यतस्ते शरव्रातैर्हन्यमानाः समन्ततः ॥**
**जिजीविषव उत्सृज्य पलायनपरा ययुः ॥ ३३ ॥**

अस्यत इति ॥ अस्यतः शरान् क्षिपतस्ते सतः संमुखमनागता अपि तैः क्षिप्तैरेव शरव्रातैः सर्वतो हन्यमानाः संछिन्नभिन्नसर्वाङ्गा जिजीविषवो भूत्वा धर्मं संग्रामं चोत्सृज्य पलायनपराः सन्तो ययुः ॥ ३३ ॥

देशस्याविवक्षितत्वाद् यत्र क्वापि। ये तु दूरस्थास्ते पलायिताः। येऽपि निकटस्थास्तेऽपि जिजीविषवो भूत्वा पलायनाऽसंभवादुपायान्तरं कृतवन्त इत्याहुः–

**केचित् प्राञ्जलयो भीता न्यस्तशस्त्रा दिवौकसः ॥**
**मुक्तकच्छशिखाःकेचिद्भीताःस्मइतिवादिनः ॥ ३४ ॥**

केचिदिति ॥ प्राञ्जलयः स्तोतुमिव प्रवृत्तानां कायिकी अवस्था प्रदर्शिता। भीता इत्यन्तःकरणस्य। त्यागे न हन्यत इति शास्त्रार्थपरिपालनाय न्यस्तशस्त्राः। तर्हि तेषां कथं स्वधर्मत्यागे स्वर्गो भविष्यतीत्याशङ्क्याहुः ॥ दिवौकस इति ॥ स्वर्ग ओको गृहमात्रं, न तु स्वर्गभोग इत्यर्थः। ननु देवाः कथमयुक्तं कृतवन्त इत्याशङ्क्याहुः ॥ मुक्तकच्छशिखा इति ॥ मुक्ताः कच्छाः शिखाश्च येषाम्। परमापदा वैकल्यं तेषामुक्तम्। आपदि स्वधर्मास्त्यक्तुं शक्यन्ते। येषां पुनर्दैवगत्या मुक्तकच्छशिखात्वं न जातं तेषां का गतिरितिचेत्तत्राह ॥ केचिद्भीताः स्म इति वादिन इति ॥ शरीरे भीतकार्यस्यादर्शनान्मुखत एव भीता वयमित्याहुः ॥ ३४ ॥ ❀ ॥ ननु ये वध्यास्ते सर्वथैव वध्या इति वचनेऽपि किं स्यात्, तत्राहुः—

**न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसन्नतान् ॥**
**हंस्यन्यासक्तविमुखान् भग्नचापानयुध्यतः ॥ ३५ ॥**

न त्वमिति ॥ संग्रामधर्मस्त्वया न त्यज्यते। अतो ये देवा

विस्मृतशस्त्रास्त्रा भयात् । शस्त्राणि, धृत्वा यैर्मार्यते । अस्त्राणि दूरात् । मन्त्रयुक्तानि वा । भयादुभयविधान्यपि विस्मृतानि । विगतो रथो येषाम् । सारथ्यादीनां वधात् । प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मविदिति वाक्याद् विरथोऽप्यवध्यः । भयेन सम्यग्नताः शरणागताः । प्रसङ्गादन्यानप्याह ॥ अन्यासक्तविमुखान् ॥ अन्यासक्ताश्च ते विमुखाश्च । उभयविधा वा । भग्नचापान् अयुध्यतः । निरीक्षकान् न हंसीति संबन्धः ॥ एते षड्विधाः सप्तविधा वा न हन्तव्याः । अतस्त्वया स्वधर्मे परिपाल्यमाने पूर्वन्यायेन देवा जीविता इति भावः ॥ ३५ ॥

एवं साधारणानामप्रयोजकत्वमुक्त्वा महतामप्याह—

किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ॥
रहोजुषा किं हरिणा शम्भुना वा वनौकसा ॥ ३६ ॥
किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥
तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ॥
ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ ३७ ॥

किं क्षेमशूरैरिति ॥ येऽपि वाय्वग्निवरुणाऽऽदयः शूराः प्रसिद्धास्तेऽपि क्षेमशूरा एव क्षेमे सति गृहे भार्यायां वा शूराः । यत्राक्षेमशङ्कैव नास्ति।न हि भार्या पतिं मारयिष्यतीति संभावना । यत्र पुनः संभावना मारयिष्यतीति तत्र पलायनमेव। एतदर्थपरिज्ञानादेव विबुधाः ।एतच्छारीरशौर्यं तेषां निरूप्य वाचनिकं शौर्यं निरूपयन्ति ॥ असंयुगविकत्थनैरिति ॥ विकत्थनं स्वशौर्याविष्करणवाक्यम् । तदपि न संयुगे केनापि सह यदा न युद्धसंयोगस्तदैव विकत्थनम् । एवं देवान् दूषयित्वा मुख्याँश्चतुर आहुः । अस्ति हरिः शूरः, परं कस्यापि स संमुखो न भवति।

अस्यत इति ॥ अस्यतः शरान् क्षिपतस्ते सतः संमुखमनागता अपि तैः क्षिप्तैरेव शरव्रातैः सर्वतो हन्यमानाः संछिन्नभिन्नसर्वाङ्गा जिजीविषवो भूत्वा धर्मं संग्रामं चोत्सृज्य पलायनपराः सन्तो ययुः ॥ ३३ ॥

देशस्याविवक्षितत्वाद् यत्र क्वापि । ये तु दूरस्थास्ते पलायिताः । येऽपि निकटस्थास्तेऽपि जिजीविषवो भूत्वा पलायनाऽसंभवादुपायान्तरं कृतवन्त इत्याहुः—

**केचित् प्राञ्जलयो भीता न्यस्तशस्त्रा दिवौकसः ॥**
**मुक्तकच्छशिखाःकेचिद् भीताःस्मइतिवादिनः ॥ ३४ ॥**

केचिदिति ॥ प्राञ्जलयः स्तोतुमिव प्रवृत्तानां कायिकी अवस्था प्रदर्शिता । भीता इत्यन्तःकरणस्य । त्यागे न हन्यत इति शास्त्रार्थपरिपालनाय न्यस्तशस्त्राः । तर्हि तेषां कथं स्वधर्मत्यागे स्वर्गो भविष्यतीत्याशङ्क्याहुः ॥ दिवौकस इति ॥ स्वर्ग ओको गृहमात्रं, न तु स्वर्गभोग इत्यर्थः । ननु देवाः कथमयुक्तं कृतवन्त इत्याशङ्क्याहुः ॥ मुक्तकच्छशिखा इति ॥ मुक्ताः कच्छाः शिखाश्च येषाम् । परमापदा वैकल्यं तेषामुक्तम् । आपदि स्वधर्मास्त्यक्तुं शक्यन्ते । येषां पुनर्दैवगत्या मुक्तकच्छशिखात्वं न जातं तेषां का गतिरितिचेत्तत्राह ॥ केचिद्भीताः स्म इति वादिन इति ॥ शरीरे भीतकार्यस्यादर्शनान्मुखत एव भीता वयमित्याहुः ॥ ३४ ॥ ❀ ॥ ननु ये वध्यास्ते सर्वथैव वध्या इति वचनेऽपि किं स्यात्, तत्राहुः—

**न त्वं विस्मृतशस्त्रास्त्रान् विरथान् भयसन्नतान् ॥**
**हंस्यन्यासक्तविमुखान् भग्नचापानयुध्यतः ॥ ३५ ॥**

न त्वमिति ॥ संग्रामधर्मस्त्वया न त्यज्यते । अतो ये देवा

विस्मृतशस्त्रास्त्रा भयात् । शस्त्राणि, धृत्वा यैर्मार्यते । अस्त्राणि दूरात् । मन्त्रयुक्तानि वा । भयादुभयविधान्यपि विस्मृतानि । विगतो रथो येषाम् । सारथ्यादीनां वधात् । प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मविदिति वाक्याद् विरथोऽप्यवध्यः । भयेन सम्यग्नताः शरणागताः । प्रसङ्गादन्यानप्याह ॥ अन्यासक्तविमुखान् ॥ अन्यासक्ताश्च ते विमुखाश्च । उभयविधा वा । भग्नचापान् अयुध्यतः । निरीक्षकान् न हंसीति संबन्धः ॥ एते षड्विधाः सप्तविधा वा न हन्तव्याः । अतस्त्वया स्वधर्मे परिपाल्यमाने पूर्वन्यायेन देवा जीविता इति भावः ॥ ३५ ॥

एवं साधारणानामप्रयोजकत्वमुक्त्वा महतामप्याह—

किं क्षेमशूरैर्विबुधैरसंयुगविकत्थनैः ॥
रहोजुषा किं हरिणा शम्भुना वा वनौकसा ॥ ३६ ॥
किमिन्द्रेणाल्पवीर्येण ब्रह्मणा वा तपस्यता ॥
तथापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ॥
ततस्तन्मूलखनने नियुङ्क्ष्वास्माननुव्रतान् ॥ ३७ ॥

किं क्षेमशूरैरिति ॥ येऽपि वाय्वग्निवरुणाऽऽदयः शूराः प्रसिद्धास्तेऽपि क्षेमशूरा एव क्षेमे सति गृहे भार्यायां वा शूराः । यत्राक्षेमशङ्कैव नास्ति।न हि भार्या पतिं मारयिष्यतीति संभावना । यत्र पुनः संभावना मारयिष्यतीति तत्र पलायनमेव। एतदर्थपरिज्ञानादेव विबुधाः ।एतच्छारीरशौर्यं तेषां निरूप्य वाचनिकं शौर्यं निरूपयन्ति ॥ असंयुगविकत्थनैरिति ॥ विकत्थनं स्वशौर्याविष्करणवाक्यम् । तदपि न संयुगे केनापि सह यदा न युद्धसंयोगस्तदैव विकत्थनम् । एवं देवान् दूषयित्वा मुख्याँश्चतुर आहुः । अस्ति हरिः शूरः, परं कस्यापि स संमुखो न भवति।

यस्त्वेकान्ते तदेकपरस्तिष्ठति हरिरपि तस्य सम्मुखो भवतीति स्तुतिपक्षे यथाश्रुतमेव। पक्षान्तरे स्त्रीतुल्यता निरूपिता॥ हरिणेति सर्वदुःखनिवारकत्वं निरूपयन्तो दुःखितेष्वेव शौर्यादिरहितेषु तस्याविर्भावो निरूपितः। अस्ति च त्रिपुरान्तकः शूरः। सोऽपि सर्वदा वनवासी तपस्वी। न हि वनस्थस्तपस्वी कस्यचिद् द्विष्टो भवति असमत्वात्॥ ३६॥

देवेन्द्रस्तु यद्यपि वृत्रहा। तथाप्यल्पवीर्यः। अन्यथा वज्रादिप्रार्थनां कथं कुर्यात्। ब्रह्मा यद्यपि महान् भवति तथापि ब्राह्मण एव तपस्वी। एवं यद्यपि सर्वे देवा अप्रयोजकास्तथाऽपि राजनीतिविचारेण ते नोपेक्ष्या इत्याहुः॥ तथाऽऽपीति॥ देवानां दैत्यानां च सापत्न्यमस्ति। कश्यपदायादाः सर्वे भिन्नमातृजाः। ते शत्रव एव परस्परं भवन्ति। अतः सहजद्वेषित्वाद् यदैव ते पुष्टा भविष्यन्ति तदैव मारयिष्यन्तीति नोपेक्ष्याः। क्षीणदशायामेव मारणीयाः। अयमर्थो भवति नवेति विचारका जानन्ति। वयं त्वेवं मन्महे॥

एवं माहात्म्यं नीतिं चोक्त्वा किं कर्त्तव्यमित्याकाङ्क्षायामाहुः॥ तत इति॥यदेव देवानां मूलं भविष्यति तस्यैव खनने नियुङ्क्ष्व आज्ञापय॥ अनुव्रतानिति॥ योगेन रूढ्या च सर्वथा भवन्तमनुसृता वयम्। मूलमग्रे वक्तव्यं, खननं च मध्ये॥ ३७॥

उपेक्षायां को दोष इतिचेत्तत्राहुः—

यथाऽऽमयोऽङ्गे समुपेक्षितो नृभि-
र्न शक्यते रूढपदश्चिकित्सितुम्॥
यथेन्द्रियग्राम उपेक्षितस्तथा
रिपुर्महान् बद्धबलो न चाल्यते॥ ३८॥

यथेति॥ आमयो रोगोज्वरादिरङ्गेआविर्भूतस्तमनादृत्य यदि स्नानभोजनादिकं कुर्यात् तदा रूढपदः सँश्चिकित्सितुं न शक्यते अङ्गमेव नाशयति । सद्वैद्येनापि तज्जनिते सन्निपाते चिकित्सा अशक्या । अनेन सम्बन्धे विद्यमाने कथं मारणीया इति शङ्का निवारिता । तेषां सर्वनाशकत्वादिति लौकिकबाधकत्वेन निरूपितम् । वैदिकबाधकत्वेन दृष्टान्तान्तरमाह ॥ यथेन्द्रियग्राम उपेक्षित इति ॥ योगिना परमपुरुषार्थे साध्ये इन्द्रियसमूहो नोपेक्षणीयः । तेषामुपेक्षायाम्, इन्द्रैयैर्विषयाकृष्टैरिति न्यायेन सर्वनाशो भवति । प्रबलं चेदिन्द्रियं पश्चान्निवारयितुमशक्यम् । यथैहिकामुष्मिकनाश एताभ्यां, तथा सर्वनाशो देवैर्दैत्यानाम् । तदाह ॥ रिपुर्महान् बद्धबलो न चाल्यत इति ॥ महान् स्वापेक्षयाऽपि स्वरूपतः। ते चेत् संबद्धबला भवन्ति तदा चालयितुमप्यशक्याः । अतो नोपेक्षणीयाः ॥ ३८ ॥

मूलमाह—

**मूलं बिष्णुर्हि देवानां यत्र धर्मः सनातनः॥**
**तस्य च ब्रह्मगोविप्रास्तपोयज्ञाः सदाक्षिणाः॥ ३९ ॥**

मूलं विष्णुरिति ॥ देवानां मूलं विष्णुः । विष्णुप्रभवा देवाः । सत्त्वगुणादेवाः । तस्याधिष्ठाता तु विष्णुः । इमां युक्तिं हिशब्द आह । प्रकारान्तरेणापि देवानां मूलं विष्णुरित्याह ॥ यत्र धर्मः सनातन इति ॥ धर्मो यागादिः । स तु देवतोद्देशेन द्रव्यत्यागात्मकः । स केवलं वेदोक्तः सनातनः। तानि धर्माणि प्रथमान्याऽऽसन्निति श्रुतेः । यज्ञाभावे देवानां भक्ष्याभावात् । यज्ञो देवानां मूलम् । स च स्वदेवतानियम्यः । तस्य च देवता विष्णुः । यज्ञो वै विष्णुरिति श्रुतेः । न केवलं तस्य नियामकत्वं,

किन्त्वाधारत्वमपि। तदाह॥यत्रेति॥ यत्र विष्णौ सनातनो धर्मः। धर्मस्य प्रभुरच्युत इति वाक्यात्। तस्माल्लौकिकवैदिकदेवानां मूलं विष्णुः। तस्यापि मूलमाह ॥ तस्येति ॥ चकाराद्देवानामऽपि। ब्रह्म वेदः। गावो विप्राश्च तपोयज्ञाः सदक्षिणाः। प्रमाणं वेदः। हविरेकत्र, मन्त्राश्चैकत्र। द्विविधो हि धर्मः। प्रवृत्तिनिवृत्त्यात्मकः। प्रवृत्त्यात्मको यज्ञो निवृत्त्यात्मकस्तपः। सदक्षिणाः दक्षिणा यज्ञस्य भार्या। अनेन प्रवृत्तिधर्मत्वं तस्योक्तं, पञ्चात्मको वा मूलत्वेन निरूपितः। अनेन द्वयं मूलत्वेनोक्तं ब्राह्मणा गावश्च। तत्र दुहन्त्यो गावो, यज्ञकर्त्तारस्तपस्विनो,वेदो ब्राह्मणाः॥३९॥

तेषां खननमाह—

तस्मात् सर्वात्मना राजन् ब्राह्मणान् ब्रह्मवादिनः॥
तपस्विनो यज्ञशीलान् गाश्च हन्मो हविर्दुघाः॥ ४०॥

तस्मादिति॥ सर्वात्मना लौकिकवैदिकसाधनैः स्वतः परतः साक्षात् परम्परया च यथैव ते निवृत्ता भवन्ति। ब्राह्मणानां विशेषणं ब्रह्मवादिनः। वेदवेदार्थविदः। उभयाविधं च कुर्वन्तीति। तपस्विनो यज्ञशीलाश्च हविर्दुघाः पयोदोग्ध्न्यो गाः। हनधातोर्लटि बहुवचनं, हन्म इति ॥ ४० ॥

एवं विष्णुमूलत्वेन ब्राह्मणगवां निराकरणं निरूप्य भगवच्छरीरत्वेनाप्येतान् निरूपयन्ति साक्षान्निराकरणाय—

विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः॥
श्रद्धा दया तितिक्षा च क्रतवश्च हरेस्तनूः॥४१॥

विप्रा इति॥ विप्रा गावः। चकारादन्यान्यप्याम्नानि। वेदाः। चकारादङ्गानि व्रतानि वा। तपः सत्यं दमः शम इति। ब्रह्मचर्याद्याश्रमधर्माः। तपः शारीरो धर्मः। सत्यं वाचः। दम

इन्द्रियाणाम् । शमोऽन्तःकरणस्य । श्रद्धा सर्वत्र, दया च सर्वेषु तितिक्षाऽतिक्रमसहनम् । एवं दशविधो दशावतारः । क्रतवोऽसंख्याता ज्योतिष्टोमादयः । एते सर्वे सर्वदुःखहर्त्तुर्भगवतस्तनूस्तन्वः । तस्माद्विष्णौ प्रयत्नः प्रतिष्ठितः ॥ ४१ ॥

उपसंहरँस्तस्य मूलत्वमाह—

**स हि सर्वसुराध्यक्षो ह्यसुरद्विड् गुहाशयः ॥**
**तन्मूला देवताः सर्वाः सेश्वराः सचतुर्मुखाः ॥**
**अयं हि तद्वधोपायो यदृषीणां विहिंसनम् ॥ ४२ ॥**

स हीति ॥ मुख्ये कार्यसंप्रत्यय इति न्यायाद् गौणानां देवानां निराकरणं व्यर्थम् । पूर्वोक्तन्यायेन सर्वसुराणां विष्णुरेवाध्यक्षः प्रभुः । किञ्च अन्ये देवाः, तथा असुरान् न द्विषन्ति । कदाचित् सहभावोऽपि लक्ष्यते । हरिस्त्वसुरद्विडेव, मारयितुमपि न शक्यते साक्षाद्यतो गुहाशयः । गुप्ते अन्तःकरणे वा तिष्ठतीति । अध्यक्षत्वं च न लौकिकप्रभुवत्, किन्तु मूलभूतोऽपीत्याह तन्मूला इति ॥ स्त्रीलिङ्गप्रयोगोऽवगणनार्थः । महादेवस्य ब्रह्मणश्च स्वतन्त्रतामाशङ्क्याहुः॥सेश्वराः सचतुर्मुखा इति

अतो विष्णोः प्रतीकारः कर्त्तव्यः । प्रतीकारश्च ऋषीणां निराकरणमेवेत्याह— अयमिति ॥ ऋषिपदेनैव सर्वे धर्मा उक्ताः ॥ ४३ ॥

एवं तेषां वचनं श्रुत्वा किं कृतवानित्याशङ्क्याह—

**एवं दुर्मन्त्रिभिः कंसः सह सम्मन्त्र्य दुर्मतिः ॥**
**ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ॥ ४४ ॥**

एवमिति ॥ नन्वयं क्षत्रियो ब्राह्मणरक्षकः कथं ब्रह्महिंसां हितत्वेन मेने, तत्राह ॥ दुर्मन्त्रिभिरिति ॥ एते दुष्टा मन्त्रिणः

पर्यवसानदोषदर्शनाभावात् । तैः सह सम्यङ्मन्त्रणं कृत्वा दुर्मतिर्जातः । बुद्ध्या हि सर्वनिर्णयः । बुद्धिनाशकस्तु दुःसङ्गः । तत्राऽपि मन्त्रित्वेन गृहीतः । अत एव ब्रह्महिंसां स्वस्य हितत्वेन मेने । ननु दुःसङ्गेऽपि कथं स्वाभाविको भावोऽन्यथा जात इति चेत्तत्राह ॥ असुरः कालपाशेनावृतश्च । असुरत्वात् स्वभावदुष्टः। कालपाशावृत आपद्ग्रस्तः। आपदि सर्वबुद्धिनाशो भवति । तत्राऽपि कालपाशपदाभ्यां महती आपदा निरूपिता ॥ ४४ ॥

एवं बुद्धिभ्रंशे जाते यत् कृतवांस्तदाह—

**सन्दिश्य साधुलोकस्य कदने कदनप्रियान् ॥**
**कामरूपधरान् दिक्षु दानवान् गृहमाविशत् ॥ ४५ ॥**

सन्दिश्येति ॥ साधुलोकस्य कदने पीडायां कदनप्रियान् स्वतोऽपि कदनेच्छून् कदनकरणार्थं तत्तत्साधकनानारूपधारकान् दशादिक्ष्वप्यादिश्य स्वविषये अन्यविषये च कामरूपधराणां सर्वत्रैव सामर्थ्यसम्भवात् ॥दानवानिति॥ क्रूरान् राक्षसमात्रे दानवप्रयोगः ॥ स्वगृहमाविशत् ॥ यथा उपद्रवे कश्चित् प्रभोः स्थाने गतो दर्शनमेव न प्राप्नुयात् । एतदर्थं गृहे प्रवेशनम् ॥ ४५ ॥

**ते वै रजःप्रकृतयस्तमसारूढचेतसः ॥**
**सतां विद्वेषमाचेरुरारादागतमृत्यवः ॥ ४६ ॥**

ते च ततोऽप्यधिकं कृतवन्तइत्याह ॥ वैनिश्च येन ते स्वभावत एव रजःप्रकृतयः। राजसाः क्रूरा भवन्ति । आगन्तुकेन च पुनस्तमसारूढं चित्तं येषाम् पूर्वसिद्धविवेकनाशार्थं तमः । रजस्तमोभ्यां व्याप्ताः सात्त्विकान् द्विषन्त्येव । अतः सतां विद्वेषं विशेषेण द्वेषो यस्मात् तादृशमुपद्रवं धर्मधनादिनाशनमासमन्ताच्चेरुः कृतवन्तः । अनेन तेषां स्वरूपतोऽन्तःकरणनाशाद् धर्मतश्च

उपद्रवं कृतवन्त इत्युक्तं भवति । ननु स्वाम्याज्ञाता अधिकं कि-मर्थं कृतवन्तस्तत्राह ॥ आरादागतमृत्यव इति ॥ मृत्युग्रस्तास्तथा कृतवन्तः ॥ विकलो ह्यन्यथा करोत्येव ॥ ४६ ॥

माययैवैतत् कारितं सर्वनाशार्थमिति ज्ञापयितुं महदतिक्रम-स्य फलमाह—

आयुः श्रियं यशो धर्मं लोकानाशिष एव च ॥
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ ४७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे चतुर्थोऽध्यायः ॥ १० ॥ ४ ॥

आयुः श्रियमिति ॥ जीवानां षड् उत्तमा गुणाः । तदभावे प्राणी अकृतार्थः स्यात् । तत्र प्रथममायुः । जीवतो हि सर्वं भवति । ततः श्रीः । स्पष्टः । तस्या उपकारः । ततो यशः कीर्तिः । ततोऽन्तरङ्गो धर्मः । तैः साध्या लोकाः स्वर्गादयः । तत्र लोके सर्वा एवाशिषः । चकारादैहिका अपि पुत्रादयः । एवकारेण सर्वेषामेवाशीष्टं प्रदर्शितम् । अतो यस्य यदभीष्टं तदेव नाशय-तीत्युक्तं भवति । अन्यथा गणिताश्चेत्तस्याभीष्टा न भवेयुस्तदा इष्टमेव चेष्टितमिति महदतिक्रमः किं कुर्यात् । अतो यत्किञ्चिदे-वाभीष्टं तदेव हन्ति । लोकासिद्धास्तु गणिताः । अनुक्तसर्वसंग्रहा-ऽर्थं सर्वाणीति ॥ पुंस इति स्वतन्त्रस्यापि महतो भगवदीयस्य अतिक्रमः उल्लङ्घनम् । महत्त्वं भगवत्सबन्धादेव । अन्यथा आराग्रमात्रस्य कथं महत्त्वं स्यात् । एवं भगवच्चरित्रसिद्ध्यर्थं माया-कार्यं निरूपितम् ॥ ४७ ॥

इति श्रीभागवतसुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे चतुर्थाध्यायविवरणम् ॥१०॥४॥

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० सं० ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीत-वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-भिक्षुकृत व्याख्यानम् । सम्पूर्णम् । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा । ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपण-परम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टा-रकाचार्यसंगृहीतः । आचार्यचित्सुख-मुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः । सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सं० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट-सोमेश्वरविरचिता । ( मीमांसा ) १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशा-ऽध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मज-भट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि-मीमांसादर्शनम् ) महामहो-पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-सारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-स्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्का-चार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्ण-विरचितया खण्डनफक्किकाविभजनाख्यया व्या-ख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । ( वेदान्तः ) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्-बालबोधिनीव्याख्यया-ऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्त ) २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या-जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः । ९

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः । ५

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः २

(३५) वेदान्तपारिजातसौरभं नाम मीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्य–नारायणतीर्थ-विरचित–योगसिद्धान्तचन्द्रिका–समाख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्द सरस्वती स्वामिकृत ब्रह्माऽमृतवर्षिणी समाख्य व्याख्या-संवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वर श्रीमहेश्वरसुधीविरचितः । १

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता । श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचित टिप्पणीसहिता । २

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस, सिटी.

June 1915.

THE

# CHOWKHAMBÂ SANSKṚIT SERIEṢ;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 210.

श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणश्रीसुबोधिनीटिप्पण्योः-

# प्रकाशः

गोस्वामिश्रीश्रीपुरुषोत्तमजीमहाराजविरचितः।
श्रीमदाचार्यवर्यचरणकमलाश्रितेन माधवशर्मणा
संशोधितः।

PRAKÂSA,

A commentary on the Gloss of Sri Subodhini the commentary of Janmaprakaran

OF SRI MADBHAGWAT 10TH CHÂPTER,

BY SRI PURUSHOTTAMA JI MAHARAJA.
Edited by Mâdhava Sarma.

FASCICULUS III-३

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.
AGENTS:—
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.
*Price Rupee one.*

॥ श्रीः ॥

—:o:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२१०

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रे एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्र एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो वि एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनव

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ "

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ..

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैत-दर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाश-सहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्री-गागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविर-चिता सम्पूर्णः ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्त-सूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्तः )

(९) स्याद्वादमञ्जरीमल्लिषेणानिर्मिता सम्पूर्ण

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणप श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीया नमुनिभिर्विरचितम् । सम्पूर्ण( वेदान्तः

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्ट काचार्यसंगृहीतः । आचार्यचित्सुखमु विरचितव्याख्योपेतः ( वेदान्तः )

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमा सप्तविभक्तिविस्तृतविचाररूपः म० श्रीगिरिधरोपाध्यायविरचितः सम्पू ( न्यायः ) ... ... ...

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् सम्पूर्णम् ( मीमांसा ) ... ...

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्ट मेश्वरविरचिता । ( मीमांसा ) १

THE

# CHOWKHAMBÂ SANSKṚIT SERIEṢ;

A

COLLECTION OF RARE & EXTRAORDINRY SANSKRIT WORKS.

NOS. 162, 163 & 210.

श्रीमद्भागवतदशमस्कन्धजन्मप्रकरणश्रीसुबोधिनीटिप्पण्योः-

# प्रकाशः

गोस्वामिश्रीश्रीपुरुषोत्तमजीमहाराजविरचितः ।

श्रीमदाचार्यवर्यचरणकमलाश्रितेन माधवशर्मणा

संशोधितः ।

PRAKÂSA,

A commentary on the Gloss of Sri Subodhini the commentary of Janmaprakaran

OF SRI MADBHAGWAT 10TH CHÂPTER,

BY SRI PURUSHOTTAMA JI MAHARAJA.

Edited by Mâdhava Sarma.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.

AGENTS:-

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

1915.

श्रीकृष्णाय नमः ।

श्रीमद्भागवतदशमस्कन्धसुबोधिनीटिप्पण्योः

# प्रकाशः ।

## गोस्वामिश्रीपुरुषोत्तमाचार्यप्रणीतः ।

---

नमामि श्रीमदाचार्यचरणाब्जरजांस्यहम् ।
लाभाभिलाषमात्रेण येषां कृष्णः प्रियो भवेत् ॥ १ ॥

अग्नेस्तनूजं ननु जन्तुहेतो-
राविष्कृतं[1] स्वं सततं प्रणम्य ।
दृष्ट्वा तदाज्ञां च विचारयेऽहं
सुबोधिनीस्थानगमान्[2]पदार्थान् ॥ २ ॥

तत्र पूर्वं टिप्पण्याम् । तत्र प्रथमश्लोके नम इत्यादि श्रीश्च कृष्णश्च श्रीकृष्णौ तयोः पादाब्जतलकुङ्कुमसम्बन्धिनौ यौ पङ्कौ तयो रुचे नमः अत्रोभयोः परस्परसम्बन्धेन सात्विकभावात् कुङ्कुमस्यार्द्रता तेन पङ्कभावः । वैलक्ष्यण्यबोधनार्थं द्विवचनम् । हृदयारुण्यजनकतायां विशेषाभावात् रुच इत्येकवचनञ्च बोध्यम् । पितृपदेत्यग्रिमश्लोके कान्तिछन्दः यस्यामार्यायामक्षरेषु षोडशगुरूणि पञ्चविंशति लघूनि एवमेकचत्वारिंशदक्षराकान्तिरितिपिङ्गलप्रदीपे तल्लक्षणात् । विनिहतविश्वाशुभैरिति विशेषेण निहतं विश्वेषां स्वीयानां अशुभं यैरित्यर्थः । नमामीत्यस्याभासे स्कन्धार्थरूपोऽपि भगवानेवेति । अपिशब्दात्तत्कर्तृत्वमपि संगृह्यते । तद्रूपन्तमिति स्कन्धार्थकर्तृत्वे सति स्कन्धार्थरूपं । अत्रेदं विचार्यते मूलस्थनिरोधलक्षणगतमनुशयनपदं भावव्युत्पत्या द्वितीयस्कन्धसुबोधिन्यां श्रीमदाचार्यचरणैर्व्याख्यातम् । अस्य भगवतः अनुपश्चात्शयनं शक्तीःशाययित्वा तद्भोगार्थं स्वस्य शयनमिति । इदमेव च "निरोधोऽस्यानुशयनं प्रपञ्चे क्रीडनं हरेः।शक्तिभिदुर्विभाव्याभिः कृष्ण

---

[1] प्रकटीकृतं । [2] गंभीरार्थान् ।

स्येति हि लक्षणम्" इति कारिकायां स्फुटी करिष्यते। यथा पुरिशयनमित्यादिना विचारयिष्यते चास्मिन् पद्यविवरणे । एवं सति विलक्षणस्थितिक्रियाया एव स्कन्धार्थत्वं वक्तुमुचितम् । ननु तस्य [3]भगवत्वम् ।

अथ श्रीभागवतस्य लीलाविशिष्टभगवद्वाचकत्वाददोष इति चेद्विभाव्यते बाढं तदापि महावाक्यस्यैव वाचकत्वमायाति । नत्ववान्तरवाक्यानाम् । यदि च क्रियायां प्रविष्टो यज्ञ इव लीलायां प्रविष्टोऽनुशयनात्मार्थत्वेनाभ्युपेयते । तदापि शायिनमिति प्रयोगः कथं संगच्छत इति चेत् उच्यते । अत्र हि शयनं लीलाधिकरणकमुच्यते तेन लीलायां प्रविष्टो भगवान् स्कन्धार्थत्वेन प्रत्याप्यत इति प्रयोगः सूपपन्नः न च मूलविरोध इति वाच्यम्। स्कन्धार्थस्यानान्तरीकावरणरूपत्वेन लक्ष्यसहभावेनैव स्फुरणात्। न चेदमप्रयोजकम्। लोकेऽपि यत्र चेष्टादिभिर्नान्तरीयकैर्लक्ष्यबुद्धिस्तत्र लक्षणानां लक्ष्यव्याप्तानामेवनिश्चायकत्वदर्शनात् । अत एव तादृशं लक्षणमाहात्म्यं ज्ञापयितुं भगवतः स्वभावञ्च लीलायां तिष्ठन्लीलामन्तरो यमयतीति रूपं ज्ञापयितुमेवमाचार्यैनिरूपितमिति न कोऽपि चोद्यावसरः । अयमेवार्थोस्येति पुरावर्त्तीत्यनेन द्वितीयसुबोधिन्यामुक्तः। स एव चार्थः प्रभुचरणैर्यथा पुरिशयनमित्यादिना ध्वनितः। पुरुषसूक्ते तादृशास्थितेः पुरुषे सिद्धत्वादिति दिक्। अतः सुष्टूक्तं स्कन्धार्थरूपोऽपि भगवानिति अत एव स्कन्धान्तरारंभे नमनानुक्तिरत एव च मूलेऽत्र प्रथमतो जन्मप्रकरणमुक्तमन्यथा यत्र क्वचिन्नैव वदेत्। नवमस्कन्ध एव भगवत्प्राकट्यस्य राजानं प्रत्युक्तत्वेन प्रयोजनाभावात्। राजप्रश्नानुसारेणापि प्रथमतो वीर्याणामेव वक्तव्यत्वादिति। नमामीत्यस्य विवरणे तद्रूपं तं विवृण्वन्त इति अनुशयनरूपं भगवन्तं स्फुटी करिष्यन्तः। नमन्तीति शेषः । तदेतत् व्यक्ती कुर्वन्ति । यथेत्यादि । तत्त्वेनेति शेषत्वेन एवं व्याख्यायैतत्प्रयोजनमाहुः । एतेनेत्यादि । व्यतिरेकालंकारगर्भेणानेन वाक्येन तदेव व्युत्पादयन्तीति । तत्रैकेत्यादि । व्यतिरेकं स्फुटी कृत्य विशेषणानां तात्पर्यं वदन्तः प्रथमं द्वितीयमाहुः। अत्रेत्यादि । तेनेति पुनर्लीलापदकथनेन । तथा च प्रथमविशेषणस्थलीलापदेन नायिकाप्राप्तावपि

३ तथाङ्गीकारे श्रीधरमतप्रवेशः स्यात्। ४ स्वीक्रियते। ५ वशीकरोति।

विवक्षितरूपतया प्राप्तिर्नस्यादतस्तथेत्यर्थः । प्रथमस्य तदाहुः । यथापुरीत्यादि तथासतीति । निद्रार्थकत्वे सति तथा च द्वितीयाविशेषणस्थशङ्कानिरासः । शयनशब्दार्थनिश्चयश्चेति प्रयोजनद्वयमित्यर्थः । एवञ्चात्र जाग्रच्छयनमेव विशेषतो निरूप्यत इति ज्ञापितं । तत्तल्लीलानुरूपपदेनेतरे स्वप्नसुषुप्तिरूपेऽपि सूचिते ज्ञेयेऽतो न द्वितीयस्कन्धसुबोधिनीविरोधः।ननु स्कन्धार्थरूपत्वेन भगवति निरूपणीये व्यतिरेकमुखेन निरूपणस्य कोवाशय इत्याकाङ्क्षायामाहुः । नारायणइत्यादि- स्थायिभावात्मके स्वस्मिन्निति यद्यज्जनकं तत्तद्गुणकं यद्यद्गुणकं तत्तदविनाभूतं यद्यदविनाभूतं तत्तदात्मकमिति व्याप्तेः समन्वयाधिकरणे सूचितत्वात्तादृशभावोत्पादकत्वेन रत्यात्मकस्थायिभावात्मके पुरुषोत्तमे तथा च लीलाविवरणात्मककार्येण तादृशभगवत्स्थितिः श्रीमदाचार्यहृदयेऽनुमेयेति स्वीयानां बोधनार्थं तथा भावनीयामिति स्वीयशिक्षणार्थं च व्यतिरेकमुखेन कथनं चमत्काराधानार्थमित्यर्थः । नन्वेवं सति कृष्णावतारस्य सर्वावतारश्रेष्ठत्वेन तात्पर्यनीये श्रवणात् कृष्णावतारसाम्यमेवस्कन्धार्थात्मके रूपे निरूपणीयं किं नारायणसाम्यनिरूपणेनेत्यत आहुः। येनेत्यादि । तथा च मूलानुरोधेन तथा निरूपणमित्यर्थः। ननु यद्यपि मूले लक्षणवाक्ये भावव्युत्पत्यानुशयनपदेन स्थितिक्रियाविशेषो वक्तुं शक्यः।तथापि स्कन्धे तु नानाविधालीला एव स्फुटं प्रतीयन्ते इति सा व्युत्पत्तिः कथं सङ्गच्छेदित्यत आहुः। मूलेऽनुशयनेत्यादि । तुरप्यर्थे । सनिरोध इति । ग्राह्य इति शेषः । मूले अनुशयनशब्दस्य भावार्थकत्वपक्षेऽपीत्यस्य सनिरोध इत्यनेनान्वयः। अनुशय्यत इत्यादिनोक्तव्याकरणव्युत्पत्या ताभिः शक्तिभिः सह निगूढभावकरणं येन क्रियाविशेषेण स निरोधः । तथाचात्र लिङ्गोपहितलैङ्गिकभानवत् करणोपहितैव क्रियोच्यते क्रियोपहितं वा करणमिति व्युत्पत्ति द्वयेप्यदोषः तदेतन्निगमयति । स्वकीयेष्वित्यादि। सेति करणरूप फलरूपा च अतो न कोऽपि दोषः[1] इदमेव करणोपधानं द्वितीयसुबोधिन्यां शक्तीः शाययित्वा तद्भोगार्थं शयनमिति, भोजनमिति भोजनक्रियायाः अत्रत्यटिप्पण्यां तत्तल्लीलानुरूपास्थितिरिति विशेषणेन च सूच्यते इति न कोऽपि शङ्कालेशः ॥ १ ॥ २॥

---

१ दोषलेश इत्यपि पाठः ।

सुबोधिन्यां स्वोक्तो दशमार्थः सर्ववादिसम्मतो नेति वादिनिरासाय विचारं प्रतिजानते। दशमार्थ इत्यादि । इदं निबन्धे स्पष्टम् । ननु कथमसंशय इत्यत आहुः । नवेत्यादि । यः कृष्णो नवलक्षणालक्ष्य उक्त आभासश्च निरोधश्चेत्यादिना तस्यात्र निरूपणात् ॥ ३ ॥

क्रमभावित्वादिति । अत्र सर्गोविसर्गश्चेत्यत्रोक्तः क्रमः यद्यपि स्वबुद्धिनिर्णीतार्थापेक्षया महापुरुषोक्तक्रमस्य प्रबलत्वान्निरोध एव दशमार्थत्वेनायाति तथापि प्रलयात्मकस्य तस्य परिदृश्यमानत्वाभावात्संदेह इति भावः। पूर्वपक्षी अत्र चोदयति । लीलेत्यादि । दौर्बल्यं साधयति ॥ ४ ॥

यथेत्यादि । अथवा महापुरुषोक्तत्वात् क्रमएवादरणीय इत्यत आहुः । यथेत्यादि । अर्थानिर्द्धारे किं विश्वासमात्रेण फलं भवत्यपि तु नेति काकुः[२] परिहासार्थः । दूषणान्तरमाह । निरोध इत्यादि फलितमाहुः महत्त्वादित्यादिना समाधत्ते ॥ ६ ॥ नहीत्यादि । नन्वयं न नियम इत्यत आहुः ॥७॥ अग्र इत्यादि तस्याःफलार्थं श्रवणमस्त्विति चेत्तत्राहुः ॥ पूर्वेत्यादि ॥ ननु कार्यकारणभावो नादर्त्तव्य इति ग्रहिलवादेति प्रसङ्गं दूषणान्तरमाहुः ॥ ८ ॥ कृष्ण इत्यादि । स्वोक्तसमर्थनायाहुः । क्रम इत्यादि । ननु भवत्वेवं तथापि लक्षणसमन्वयः कथं कार्य इत्याकाङ्क्षायां लक्षणं विवृण्वन्ति । निरोधइत्यादि । तथा च लक्ष्यनिरूपके स्कन्धे क्रीडनस्य दर्शनार्थमेव लक्षणार्थो नान्य इति न दोष इत्यर्थः । एवं च द्वितीयसुबोधिन्यां यदुक्तमनुशयनं नामशक्तीः शाययित्वा तद्भोगार्थं पश्चात्स्वस्य शयनं तच्च जाग्रदादिभेदेन त्रिविधं शक्तयश्च द्वासप्ततिनाडीरूपा देहस्य तावत्यः । आत्मनश्चादयो द्वादश[३] तेन सप्ताशीत्यध्याया इति । तदप्येतेन स्मारितं ज्ञेयम् । प्रपञ्चस्य देहत्वात्तेन दैहिकानां दुर्विभाव्यपदार्थादीनां च संग्रहात् तेनाभेदः फलिष्यति ॥ ९ ॥ १० ॥

ननु किमित्येवं व्याख्यायते भगवता दुष्टराजानोऽपि मारिता इति तमादाय प्रलय एवार्थः कुतो न ग्राह्य इत्याकाङ्क्षायां दूषणान्याहुः । आद्यन्तयोरित्यादि ॥ एषामर्थष्टिप्पणीतो ज्ञेयः ।

---

२ भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते ।

३ श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया च निशेवितमिति दशमोक्ताः द्वादश ।

टिप्पण्यां एवं सतीति मारणलक्षणस्यार्थस्य स्कन्धद्वये व्यापकत्वे-नातिरिक्तत्वे सतीत्यर्थः । तस्या इति । नैमित्तिकत्वेनागन्तुक्या इत्यर्थः ॥११॥ सुबोधिन्यां भूमिभारावताराय यदर्थं जन्ममापते इति बोपदेवमतं दूषयन्ति । तदर्थमित्यादि । पृथास्तोत्रेति । तथा हि "तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविता-नार्थं कथं पश्येमहि स्त्रिय" इत्युक्तं तद्विरोधीत्यर्थः ॥१२॥ दूषणान्तर-माहुः ॥ कार्येत्यादि ॥ अर्थोऽस्य टिप्पण्यां स्फुटः । टिप्पण्यां । तथा-सतीति । नवभ्य आधिक्ये सतीत्यर्थः । त्यागश्चेति चकारः प्रस्तु-तपक्षेऽपि तद्दूषणज्ञापनार्थः । दशमस्येति वाक्ये हि नवानामेवलक्ष-णत्वमभिप्रेतं न तु दशानामिति हृदयं सुबोधिन्याम् । ननु मारण-लक्षणनिरोधश्चेन्नदशमार्थस्तदा भूमिर्दृप्तनृपेत्याद्युक्तकथायाः कथं सङ्गतिरित्यत आहुः । भक्तत्वादित्यादि । उद्धार इति दुखोद्धारः तथाच तत्रापि भक्तस्यैव निरोध इति सुकरैव सङ्गतिरित्यर्थः॥ १३॥

ननु भूमारभूता हि राजानस्तेचेत् जन्मप्रकरणे मारिता इति कथं दुखोद्धारो जन्मप्रकरण इत्यत आहुः । प्रकट इत्यादि । भूमेर्हि पापबाहुल्येन भारो न तु नरबाहुल्येन अन्यदापि तेषां पर्वतादीनाञ्च सत्त्वात् । प्रकटे च प्रभौ सूर्ये तम इव पापं नष्टमतस्तथेत्यर्थः । दि-ष्ट्या हरेस्या इति द्वितीयाध्यायपद्ये स्पष्टमिदं प्रथमाध्यायऽव्याप्ति माशंक्य तत्परिहारायाहुः ॥ इतीत्यादि ॥ समुद्यम ॥ इति । स-फलउद्यम इत्यर्थः । तथाचोद्यमसाफल्यकथनात्तत्रापि क्लेशहानि-रुक्तैवेति न दोष इति भावः ॥ १४ ॥

ननु भक्तनिरोध एव चेद्भगवतः कर्त्तव्यस्तदा ब्रह्मादयो-ऽपि भक्ताः सात्विकाश्चेति त एव कुतो न निरुद्धास्तत्राहुः । ब्रह्मेत्यादि । एतदर्थष्टिप्पणीतो ज्ञेयः । ननु "तदात्मानं सृजा-म्यहम्" इति वाक्यस्वारस्यान्नैमितिकोऽपि निरोधः प्रलयात्मा-भगवत्कर्तृक एवेति लक्षणवाक्यार्थविमर्शे निरोधस्य प्रलयली-लात्वेन व्यवस्थापनाच्च नैमित्तकस्य कुतो न स्कन्धार्थरूपतेत्याशङ्का-यां पूर्वस्कन्धार्थस्वारस्यमादाय स्वोक्तार्थं दृढीकुर्वंत आहुः । भ-क्तानामित्यादि नवमे ह्रीशानुकथायां भक्तनिष्ठस्यैव संसारस्य ल-य उक्तो तेनापि तेषामेव प्रपञ्चस्य लयो वाच्योऽतो न नैमितकस्य स्कन्धार्थतेत्यर्थः ॥ १५ ॥

ननु भक्तप्रपञ्चलयो नात्र स्फुट इत्याशङ्कायां तल्लयस्वरूपमाहुः । यावदित्यादित्रिभिः । किञ्च नन्वप्रकट एव भगवान् स्वभक्तान् कुतो न निरुद्धवानित्याशंकायामपीदमुच्यते । तत्र हेतुर्वस्तुस्वभाव एवेति । किञ्च द्वितीयाध्याये स्वमुद्यमरूपाङ्गरूपणादव्याप्तिरपि निवारिता ज्ञेया तृतीयाध्यायेऽव्याप्तिं निवारयन्ति ॥ १६ ॥ १७ ॥

रूपान्तरमित्यादि । एतेनैव कापट्यस्याप्यङ्गता व्याख्यातप्राया । समानन्यायादेव बोध्या । एवञ्चात्रेदं सिध्यति । प्रपञ्चे क्रीडनं दशमार्थस्तत्फलञ्चभक्तप्रपञ्चलयः स च यावदित्यादि कारिकोक्तलक्षणको न तु लोकप्रसिद्धः ॥ प्रलयात्मकस्तेनैवास्य प्रलयलीलात्वं ब्रह्मलक्षणत्वञ्च सोऽयं सम्पूर्णे स्कन्धेऽनुस्यूतः।प्रपञ्चविस्मृतिः कृष्णात्कृष्णासक्तिश्च वर्ण्यत इत्यनेनोक्तानुक्रीडनव्यापारभूता सापि भरतसूत्रे निरोधपदेनोच्यते । यातवासनसम्प्राप्तिर्निरोधः स तु कथ्यत इति । एवं सति करणव्यापारफलानां निरोधता । पदार्थान्तरनिरूपणविशेषस्तु प्रसङ्गादिसङ्गतिविशेषप्राप्त इति नकोऽपि चोद्यावसर इति ॥ १८ ॥ तदेतद्धृदि कृत्याहुः । इति निश्चिय इतिस्कन्धार्थे निश्चित्य प्रकरणानि विभजन्ते । पञ्चेत्यादि ॥ १९ ॥ २० ॥

नान्य इति । अन्तर्याम्यधिदैवरूपांशेनेत्यर्थो निबन्धानुसारेण ज्ञेयः ॥ २१ ॥ चतुमूर्त्तिप्राकट्यस्य किं प्रयोजनमत आहुः । तत्तदित्यादि । प्रथम इति । आद्यप्रकरणार्थ इत्यर्थः । टिप्पण्यां निबन्धे प्रथमे वासुदेवस्ततः संकर्षणः ततः प्रद्युम्नस्ततोऽनिरुद्ध इत्येवं सोपपत्तिकमुक्तमतस्तथेत्यर्थः ॥ २३ ॥

न केवलं गुणा एव तथा किंत्वन्येऽपि तदनुरोधिन इत्याशयेन दृष्टान् पीडकानाहुः । कंसादेरित्यादीति । अज्ञानादिति । कंसमौर्ख्यादित्यर्थः ॥ २४ ॥ २५ ॥

त्रयमिति । दुःखत्रयमित्यर्थः । इर्यत इति । प्रथमाध्याय उच्यत इत्यर्थः । एतेन त्रयाणां भगवान्नाश्यत्वरूपहेतुतावच्छेदकमेकामिति हेत्वननुगमोऽपि परिहृतः ॥ २६ ॥ २७ ॥ २८ ॥

द्वादशभिरिति प्रीणनवाक्यस्य प्रश्नरूपत्वाभावात्तथेत्यर्थः । गुणदोषग इत्यत्र टिप्पण्याम् । दोषत्वेनेति । ऐश्वर्यादिगुण विरुद्धदोषत्वेन आदयइति आदिपदेन असंज्ञातिसहभावबहुका-

लद्वारकावासबहुपरिग्रहाणां प्रश्नस्थानां संग्रहः। अत्राद्यस्य वीर्येण द्वितीयस्यैश्वर्येण तृतीयस्य यशसा तुरीयस्य श्रिया पञ्चमस्य ज्ञानेन षष्ठस्य वैराग्येण निरोधः स्फुट एव। तथाचातोद्वादशभिः प्रश्नोन तु पुरस्फुर्त्तिकैर्वीर्यादिभिः। प्रश्नस्य स्कन्धद्वितयविषयकत्वादिति भावो बोध्यः राज्ञामित्यत्र षष्ठीजननसम्बन्धप्रतिपादकेति। राज्ञामिति या षष्ठी सा चरित्रेषु जननसम्बन्धप्रतिपादिका। तथाच तत्कृतं चरित्रं नतु तत्सम्बन्धात्प्रतिपादिकान्यकृतमित्यर्थः॥ १॥

यदोश्चेत्यत्र तत्कृत इति वंशकृत इत्यर्थः॥ २॥ ३॥

निवृत्ततर्षैरित्यत्र कारिकासु। गुणानुवादविशेषणानां तात्पर्यमक्तुं पूर्वं गुणरूपस्य चरित्रस्योत्कर्षमाहुः। स्वरूपादित्यादि। महापुरुषयोगत इति। महापुरुषो भगवान् तत्सम्बन्धात् विषयोत्तमत इति। विशेषेणविषिणोतीति विषयः। विषयश्च तत् उत्तमश्च विषयोत्तमं विषयेभ्यो वा उत्तमं इदं यस्य तथा "परिनिष्ठितोऽपि नैर्गुण्य" इत्यत्र द्वितीयस्कन्धे सिद्धम्। विषयोत्तमत इति भावप्रधानः। परममिति। परः पुरुषोत्तमो मीयते ज्ञायते येनेति तादृशम्। अत्र मां मार्गयत्येद्धेत्येकादशस्कन्धे सप्तमाध्याये भगवद्वाक्यात्। एवं चरित्रोत्कर्षमुक्त्वा तदनुवादोत्कर्षमाहुः। मुक्तस्येत्यादि। एतच्चारित्रकथनं जीवन्मुक्तस्य कार्यम् तदहन्तेभिधास्यामीति द्वितीयस्कन्धे शुकवाक्यात् स्वभावतस्तस्येयमेव कृतिरित्यर्थः। तथा च ब्रह्मानन्दादप्यधिकतररसरूपत्वात्स्वरूपोत्कर्षः भवनाशकत्वात्फलतः। नन्वस्यैवमुत्कर्षको हेतुरत आहुः। अनिन्द्यविषयश्चेति। च पुनः अनिन्द्यश्चासौ विषयश्च। अन्ये हि रूपादय संसारे बध्नन्ति इदं तु भगवति बध्नातीति तथेत्यर्थः। ननु चरित्रगानाधिकारो मुक्तानामेवेति चेदन्येषां श्रवणादिकं न स्यात्। तेषां दुर्मिलत्वादित्यत आहुः। मुमुक्षोरित्यादि। तत्र प्रकारमाहुः। विरक्त इत्यादि। संसाराद्विरक्तः अस्मिन् गुणगाने ध्रुवं यत्नं कुर्यात्। तथाचात्र राजशुकयोः श्रवणे कथने च प्रवृत्तिबोधयता शास्त्रकारेण तस्मिन्पद्ये प्रकारो बोध्यत इति भावः। पतेदिति। पाठेतु अस्मिन् गुणानुवादे रतिरहितः अयं जीवः स्थानाद् भ्रष्टोऽधः पतेदित्यर्थः। अस्मिन् पक्ष उत्तरार्द्धस्य इदं तात्पर्यम्। ननुगुणानुवादे विरक्तिरेव कथमित्याकाङ्क्षायां पशुघ्नपदतात्पर्यमाहुः। आत्मघातीत्यादि। अत्र केचिदकारप्रश्लेषं कृत्वा अपगता शुक् य-

स्मादित्यपशुक् आत्मा तं हन्तीत्यपशुघ्नः आत्माघातीत्याहुः। तन्न अप-शुक्त्वस्य सुषुप्तौ मुक्तौ वा भवनात्तादृशस्य नायं हन्ति न हन्यत इति श्रुत्यादिभिर्घात्यत्वाद्योगात्। अतः संघाताभिमानिन एव तथा-त्वमुक्तम्। तच्चाकारप्रश्लेषं विनापि पशुं हन्तीति पशुघ्न इति मूल-विभुजादित्वात्कप्रत्यये कृतेऽपि प्राप्यते एवञ्च पशुपतिः पशूनां चतुष्पदामुत्त च द्विपदां शिवस्य पशवः सर्वे जीवा। संसारवर्त्तिन इति श्रुतिस्मृतिभ्यां संसारिणां द्विपदां चतुष्पदाञ्च पशुत्वे सिद्धे अवैधव्यप्रकारेण पतद्वाघातिन आत्मघातित्वं स्वारसिकं तथा एकादशस्कन्धीयेषूक्तं च ममवाक्येषु कर्मण्यकोविदा-स्तब्धा मूर्खापण्डितमानिन इत्यादिना ये कैवल्यमसम्प्राप्ता ये चा-तीताश्च मूढताम्। त्रैवर्गिका ह्यनुक्षणिका आत्मानं घातयन्ति ते "एत आत्महनोऽशान्ता।अज्ञाने ज्ञानमानिन" इत्यन्तेन कर्मजाड्यान्निन्दिता-र्थरत्या च तेषामप्यात्मघातित्वं सिद्धं बर्हिषदुपाख्यानश्रवणेन राज्ञापि तेषां तथात्वं ज्ञानं तदभिसन्धाय त्रिविधसंग्रहार्थे पशुघ्नपदमेव राज्ञोक्तं ज्ञेयम्। यदि तु "श्रोतव्यादीनि राजेन्द्र ! नृणां सन्तिसह-स्रश " इत्यादि द्वितीयस्कन्धारम्भवाक्यानुरोधान्निर्बुद्धिरपि गुणानुवादरति शून्यत्वेनाद्रियते तदा तु हन्तीति घ्न इति घ-अर्थे कं विधाय तेन त्रिविधानात्मघातिनः संगृह्य। पशुसहितो घ्नः पशुघ्न इत्येवं व्युत्पत्या पशुपदेन पशुहन्तेः सकर्मकत्वात्समभिव्या-हारतोर्थतः त्रिविधान् पशुघ्नानादाय पशुघ्नपदे चत्वारः संग्राह्या। किञ्चात्र पुमानितिपदेन पशुघ्नव्यतिरिक्तानां पुंसां श्रवणाधिकारबोध-नात् स्त्रीजीवोऽपि श्रवणाधिकारशून्यत्वेन बोध्यते स च मायापरि-गृहीतः सूक्ष्मदेहविशिष्टो ज्ञेयः।यो गीतायां आसुरीसम्पत्तियुक्तः उक्तः एवमेते पञ्चापि कारिकया संगृहीताः तथाचायमन्वयः। आत्म-घाती कर्मजडो निन्दितार्थरतः सदा विरक्तः ततः पृथक् चेत् पशु-स्त्रीव्यतिरिक्तो नेति बोध्यः। अत्र यत्पशुस्त्रियौ त्रिभ्योभिन्नतयोक्तौ तत् पशुघ्नपदस्य व्युत्पत्तिद्वयबोधनार्थम्। एवं कारिकाभिस्तात्पर्यं संगृह्य श्लोकं व्याकुर्वन्ति। प्रथमत इत्यादि निवार्यदोषेति ते चक्षु-दादयो ज्ञेयाः अकृतेस्तान्निवारकत्वं च परस्परं त्वद्गुणवादेति कर्दमस्तुतौ तृतीये स्फुटं। ननु कारिकायां पशुनामनधिकारकथनम-सङ्गतं तेषां पशुत्वसंस्कारस्तेऽत्रगृह्यन इत्यदोषः। ननु स्त्रीणामनधि-

सङ्गतं तेषां पशुत्वसंस्कारस्तेऽत्र गृह्यत इत्यदोषः ननु स्त्रीणामनधिकारः प्रत्यक्षबाधित इत्यत आहुः। याअपीत्यादि। ननु घञर्थे कविधानं संज्ञायां भवति । अत्र च घ्न इति कस्यापि संज्ञाभावात पशुघ्नशब्दस्य द्वितीया व्युत्पत्तिरसङ्गतेत्यत आहुः । ये हीत्यादि। तथा च दित्युपाख्यानसिद्धत्वात् घ्नत्वं दैत्यानां संज्ञातत्वेन सिद्धमित्यदोषः। न तद्दोषः परिहार्य इति। गुणश्रवणविरागरूपस्तद्दोषोगुणानुवादपरिहार्योनेत्यर्थः। ननु दैत्यानां तथामुक्तिप्रातिपादनस्य किं तात्पर्यमत्राहुः। आविष्टानामित्यादि । मुच्यन्त इति । आविशतां निवृत्तत्वे मुच्यन्तइत्यर्थः ॥४॥

·पितामहा इत्यत्र टिप्पण्याम् । राजपितामहेषु पञ्चत्वत्रित्वे उपपादयितुमाहुः । क्षेत्रमित्यादि । सुबोधिन्यां टिप्पण्युक्तदिशोक्तसंख्याकेषु पितामहत्वं किमित्यत उपपादयन्ति। क्षेत्रजेष्वित्यादि । बुधे व्यभिचारमाशङ्क्य समादधते। यत्रेत्यादि।तत्र तारायाश्चन्द्रनिगृहीतत्वेन चान्द्रीत्वान्नव्यभिचारइत्यर्थः । द्रौण्यस्त्रेत्यत्र अर्जुनस्य वैष्णवत्वादिति नरांशत्वेन वैष्णवत्वात्। ननु दृष्टमहात्म्ये वक्तव्ये एतस्य देहविशेषणस्य किंप्रयोजनमित्याकाङ्क्षायामाहुः। कुरूणामपीति। भीष्मादिसदृशानां भक्तानामसंन्यस्तानां ग्रहणमिति वंशसद्भावार्थं ग्रहणं तथाचेदं देहरक्षाप्रयोजनमपि स्वयं ज्ञातमिति बोधनायेदं विशेषणमित्यर्थः। अत्र कुरुशब्दात् केवलमपत्यप्रत्ययं कृत्वा तेषां मुक्तिप्राप्तिरूपोर्थः सिध्यति वंशस्य लोकप्राप्तिमात्रसाधनतायाः शास्त्रेषु स्मरणात्। प्रकृते तु भक्तिरप्याभिप्रेता पूर्वस्कन्धानुसारात् । "यास्यन्त्यदर्शनमलं बलभीमपार्थव्याजाह्वये न हरिणा निलयन्तदीयम्"इति वाक्याच्च।अतः कुरुशब्दात् पूर्वमपत्यप्रत्ययं विधाय ततो बहुत्वविवक्षायां तद्राजस्य बहुष्वित्यनेन तल्लुकं विधाय तत ओरञ् इत्यनेनादूरभवार्थेऽञ् प्रत्ययं विधाय तस्य च लुपं विधाय तादृशः कुरुशब्दो द्वन्द्वविग्रहे निक्षेप्तव्यः । तथा सति केषांचिच्चमुक्तिप्राप्त्या लोकबोधकानि "धृतराष्ट्रात्मजाः सर्वे यातुधाना बलोत्कटाः बुधिमन्तो महात्मानः शस्त्रपूता दिवं गता" इत्यादि जातीयिकानि स्वर्गारोहणपर्ववाक्यानि तथा मुक्तिबोधकानि "सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कल" इतिप्रथमस्कन्धीयवाक्यम् "ये लोका मम विमलाः सकृद्विहर्त्तुं ब्रह्माद्यै सुरऋष-

क्यतात्पर्यनिश्चायकत्वादुक्तदोषाभावाच्च निःसाधनाएवोद्धारविषयाइत्यर्थः । द्वयं वेत्यादि ग्रन्थमवतारयन्ति ननु भगवदित्यादि । द्वयं वेत्यत्र वाशब्दः पक्षान्तरे द्वयं भिन्नविधं भक्तसङ्घद्वयं न विरुध्यते । न विरुध्यते कर्मकर्त्तरि प्रयोगः फलैक्याद्विरोधं न प्राप्नोतीत्याशयेन व्याकुर्वन्ति । उभयोरित्यादि । तथाचात्र स्कन्धे ससाधनानामप्युद्धारदर्शनात्पूर्वोक्तदोषाभावाच्च ससाधनापिसंग्राह्या इत्यर्थः । तर्हि पूर्वमेव तथा कुतोनोक्तमित्याकाङ्क्षायामग्रिममवतार्य व्याकुर्वन्ति । एवं प्रकारेणेत्यादि । निःसाधनोद्धारजनकप्रकारेण लीलाकरणे तस्य शुकव्यासाभ्यां च कथने हेतुमाहुरित्यर्थः । साङ्गस्येत्यादि । अङ्गं भूमौ प्रादुर्भावस्तत्सहितोऽत्रनिरोधो भगवदेकतानत्वं तस्य प्राक्रियाप्रकर्षेण कृतिः । उभयाकाङ्क्षायुतं वाक्यकदम्बकञ्च सायुक्ता अनुकम्पाप्रयुक्तत्वादुचिता । यदि हि ससाधनानेव मुख्यतयोद्धरेत् शुकव्यासौ च तदुद्धारं मुख्यतया कथयेतां तदसाधनरूपस्योपाधेर्विद्यमानत्वान्निरूपधिपरदुःखप्रहारणव्यंग्योनुग्रहोऽनुकम्पात्मा भगवति नसिद्धेदतो निःसाधनानामेवमुख्यता युक्तेत्यर्थः । टिप्पण्यां अत्रेति औचित्ये ननूद्धारविषयनिर्द्धारस्तु गमिष्यतीत्यन्तकारिकाभ्यामेव जातइति । संसारेत्यादिकमनतिप्रयोजनमित्यरुच्या संसारेत्यस्य व्याख्यानान्तरमाहुः । यद्वेत्यादि । पूर्वोक्तामिति भगवत्प्राप्तिलक्षणं तथाच "ददर्श चक्रायुधमग्रतो यतस्तदेव रूपं दूरवापमाप"इत्यादिवाक्यादसुराअप्युद्धारविषयत्वेन संगृह्यन्त इतीदं प्रयोजनमित्यर्थः।एवं चात्र सन्दर्भेस्वशान्तरूपेष्वित्यत्र भगवद्भक्तेषु याऽनुकम्पा उक्ता सा तत् दुःखदासुरमुक्तिपर्यन्ता तु भक्तमात्रपर्यवसन्नेति । तत्सर्वकार्यार्थे भगवदवतार इति पूर्वं राज्ञा न ज्ञातं अतः तत्सर्वज्ञानार्थं कथारम्भ इति सिध्यति । ननु तथापि दुःखान्त एव ग्रन्थो वक्तव्यः सान्त्वनस्य किं प्रयोजनमतआहुः । सुबोधिन्यां धैर्यार्थमित्यादि । दुःखसहनार्थं भूमिमात्रोः सान्त्वनमाश्वासनं प्रोक्तं अन्यथा सान्त्वनाभावे दुःखस्य महत्वात् स्थितिरेव न स्यात् । तथा सत्यवतारोपि नस्यादेवाऽतस्तथेत्यर्थः । ननु यद्येवं तर्हि पश्चान्नारदोक्त्या दुःखं किमित्युक्तमतआहुः । अन्त इत्यादि । ननु तर्ह्याकाशवाण्याः किं प्रयोजनमतआहुः । वै इत्यादि । हरेः सकाशात् या आकाशवाणी सा वैप्रादुर्भावनिश्चयाय यर्ह्याकाशवाणी न स्यात् प्रादुर्भावनिश्चयो नस्यादतस्तथेत्यर्थः ।

ननु तस्याः किम्प्रयोजनं यदेवं निश्चायितवतीत्यत आहुः । वाग्देव इत्यादि । वाग्देवः सर्वमुक्त्यर्थं उद्गतः सन् तथा चक्रे कलहोद्यमेन प्रादुर्भावनिश्चायनं कृतवान् । ननु कथमेतदवगम्यते इत्यत आहुः।तथेत्यादि । हि यतो हेतोः नारदस्तथैव द्वितीयस्कन्धे पायुर्यमस्येत्यत्र सुबोधिन्यां नारदस्य कलहमुत्पाद्य तद्वारा तन्निवर्त्तकत्वं व्याख्यातं । अत्रापि कलहोत्पादकत्वेन अन्ते उक्तः अतः उपसंहारादवगम्यते इत्यर्थः । श्लोकान् विभजन्ते दशभिरित्यादि । तथेति श्रीदेवकीसान्त्वनं आकाशवाण्या मातृदुःखमेव न सर्वेषां अतस्तदर्थे नारदोक्तिः तथाच शीघ्रमवताराय नारदोक्तिरित्यर्थः । अग्रे स्फुटं क्रियेति । यदुषूपजन्यतामित्यनेनोक्ता सेवार्थाजननक्रियेत्यर्थः । भूमिरित्यत्र यावदासीन इत्यादि असुराणां वा इयमग्रआसीद्यावदासीनः परा पश्यति तावद्देवानामिति श्रुतौ भूयाच नोत्तरं कियद्वोदास्यामीति प्रश्ने ततः सलावृकीत्रिः परिक्रमति ततो याचित्वाऽशालावृकीरूपेणेन्द्रेण सर्वस्याः परिक्रमणे भूमेः प्राप्त्यावैदित्वमुक्तामिति । तदिदानीमिष्टमिति ज्ञापनाय तावद्रूपेण हविर्धान्यात्मकेन गमनमित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ यावदित्यत्र आन्तमिति अत्यन्तसंयोगे द्वितीया तथाचावतारसमाप्तिमभिव्याप्तेत्यर्थः ॥ २२ ॥ वसुदेव गृह इत्यत्र ननु पुरुषः पर इत्यत्राक्षरपुरुषएव व्याख्यायतां ननु पुरुषोत्तमः मूलेऽक्षरव्यावर्त्तकपदाभावाद्ब्रह्माण्डात्परत्वेन पुरुषत्वेनाक्षरस्य गीतायां निरूपणाच्चेत्यतआहुः।ब्रह्माण्डादित्यादि अयमर्थः गीतायां यद्यपि“परस्तस्मात्तुभावोन्यो व्यक्तोऽव्यक्तात्सनातन”इत्यत्र परस्योक्तं परम्भावत्वेन रूपेण ननु पुरुषत्वेन रूपेण । वाक्यान्तरे च “द्वाविमौ पुरुषौ लोक” इत्यनेन लोकस्थत्वं पुरुषत्वेन रूपेणोक्तं ननु परत्वं प्रकृतेष्वशांवतारव्युदासार्थं भगवत्पदे साक्षात्पदेन विशेषिते ब्रह्माण्डात्परस्य नारायणे तुरीयाख्ये भगवच्छब्दशब्दित इतिश्लोकोक्तस्य कथनात्तस्य तुरीयत्वेनाक्षरात्मकः प्रकृतिप्रवर्त्तको पुरुषोऽर्थादेव समागतो ननु व्यक्तात्परोऽव्यक्त इति पुरुषः पर इत्यनेन अक्षरात्परः पुरुषोत्तम एव प्राप्यतेऽतः सएवात्राभिप्रेत इत्यर्थ. । ननु लक्ष्मीपतेः सुरस्त्रीभिः किम्वा प्रियस्सेस्यतीत्यत आहुः । सुरस्त्रिय इत्यादि नन्वयमर्थो मूले कस्मात् शब्दात् लभ्यते इत्यत आहुः । तत्प्रियेत्यादि । तथाच सेवार्थोयं आसामवतारःसः तत्प्रियार्थं तस्या

पूर्वाभिप्सितस्य प्रियस्य निमित्तमित्यर्थादनेनैव शब्देन लभ्यते नच भगवत्प्रियार्थमिति शङ्कनीयं लक्ष्म्यपेक्षया तासु सौंदर्याधिक्याभावात् देवानां स्त्रीत्वेनावतरणेऽपि तत्सम्भवादिति ॥२३॥ वासुदेवकलेत्यत्र पूर्वश्लोके पुरुषोत्तमानिरूपणादत्र तत्कलेत्येतावतैव चारितार्थ्येऽपि यद्वासुदेवपदोपादानं तत्तात्पर्यमाहुः । सात्विकेत्यादिय इति व्यूहमुख्योवताराधिकारी अनन्त इति सप्तमी । तथाचानन्ते वासुदेवांश उच्यते तेनानन्तस्य योंशी सः पुरुषोत्तमस्य रूपान्तरं नतु पुरुषोत्तम इति बोधनार्थं वासुदेवपदमित्यर्थः । ननु तर्हि वासुदेवकलानन्तपदयोः सामानाधिकरण्येन कथमुक्तिरित्यत आहुः। कालात्मेत्यादि । चाप्यर्थे तथाचैकरूप्यादेककार्यकारित्वाच्चतथोक्तिरित्यर्थः।नचानन्तस्य तथा सामर्थ्ये विद्यमाने तत्र वासुदेवकलासत्ताकथनस्य किंप्रयोजनमाहुः । तत्रेत्यादि । तथाच कलाद्वारा तत्र वासुदेवावेशबोधनार्थं तदुक्तिरित्यर्थः । नन्वत्र वासुदेवावेशस्य किंप्रयोजनमित्याकांक्षायां टिप्पण्यां विवेचयन्ति । अत्र पूर्वेत्यादि । आवेशरूपा स्थितिरिति । वन्ह्ययोगोलकन्यायेन स्थितिः लीलास्कन्धार्थः स्यादिति तल्लीलात्वेन रूपेण स्कन्धार्थः स्यात् । ननु पुरुषोत्तमलीलात्वेन रूपेण तथा सति स्कन्धार्थानुगम इत्यर्थः । नोक्तदुषणमिति । तेन रूपेण स्कन्धार्थत्वाभावात् न प्रतिपाद्यानुगमरूपं दुषणमित्यर्थः । तर्हीत्यादि । यदि वलदेवेन पुरुषोत्तमस्य नानुशयनं तर्हि वलदेवेऽनुशयननिरूपणे किं तात्पर्यमित्यर्थः।एकवदिति। यथा आनन्दमयविद्यासद्विद्याशाण्डिल्यविद्याप्रभृतिषु तत्तत्प्रकारभेदेन भिन्नतया प्रतीयमानमपि सर्ववेदान्तप्रत्ययत्वादेकमेव ब्रह्मोच्यते तदित्यर्थः तदेतद्स्फुटी कुर्वन्ति । पूर्वोक्तेत्यादि । अंशत्वादिति पुरुषोत्तमांशत्वात् तत्रापि तथानिरूपणमिति बलदेवेऽपि तदावेशितवेशनिरूपणं मूलचरित्रमिति परम्परया तथा तथा च न प्रतिपाद्या ननु गमेनापि स्कन्धार्थाद्वहिर्भाव इत्यर्थः।तेन तद्वारा यो भक्तनिरोधः सोऽपि मूलचरित्रत्वेनैव फलिष्यतीतितात्पर्यमितिभावः एवमिति । वलदेवचरित्रमूलचरित्रयोरैक्यं । यथेत्यादि । तथाच लोको बाह्यमेवगृह्णाति नान्तरमतस्तत्प्रतीत्या न चरित्रैक्यमितिभावः एकस्यैवानेकत्वे दृष्टान्तवक्तुमाहुः । अतएवेत्यादि । यत एकस्यैव द्विधात्वं अत एव तथा चतुर्व्यूहरूपेण प्राकट्यं मथुरायां व्यूहान् वहिरवस्थाप्यान्तः स्वस्य प्रा-

कत्वं । व्रजे चैतद्वैपरित्येन पुरुषोत्तमस्य तथात्रापि द्विरूपेण प्राकट्येऽपि वस्तुतः स्वरूपैकमित्यर्थः।देवक्यामिति कारिकार्थस्तु देवक्यां शयनस्य शेषस्यैव सम्भवो न हरेः शयानस्य तत्र प्रमाणमाहुः।स्मृत इति।देवक्या जठरे गर्भं शेषाख्यं धाम मामकमित्याज्ञास्मरणात् रोहिण्यामपरस्य हर्यंशस्य इति अस्माद्धेतोः कर्षणात् मायाकृतात् शेषांशस्य कर्षणात् रोहिणीगर्भस्थस्य वासुदेवांशस्य हीनता मायाधीनता नेत्येवं बोध्यः एवं चात्र द्वयोः पृथग्गर्भबोधनात् श्रीरोहिणीगर्भस्याकस्मिकत्वशङ्काप्रयुक्ता हीनता विपरीता । अतो गर्भसम्भवोत्तरमेव रोहिण्याः श्रीगोकुले स्थापनं अन्यासामन्यत्रेति बोध्यं व्याख्याने । स्थितमिति अविनाभावेन स्थितम् । स्वर्गेऽपीति । सङ्कर्षणस्य यत्स्वस्थानं तस्मिन्नपीत्यर्थः दैत्यानां सुखार्थे इति । तेषां कालं प्राप्यैव भगवत्प्राप्तेस्तथा-तदिदं मन्येऽसुरान् भागवतानित्यत्र तृतीयस्कन्धे उपपादितं ॥ २४ ॥

विष्णोर्मायेत्यत्र तदंशभूतेति तदंशोऽपि उद्घाटने नराशिभूतो योंऽशस्तदात्मिका इदं च अंशेनेति पदस्य विवरणं ॥ २५ ॥ २६॥२७॥

राजधानीत्यत्र ॥ तत इति पूर्वविधिबोधकपदं कालत उत्कर्षबोधकं समर्पकम् । बहुकालमारभ्य राजधानीत्वाद्बोध्यम् । ननु श्रीरङ्गादिषु देशान्तरेष्वपि भगवत्सान्निध्यस्योक्तत्वादत्र को विशेष इत्यत आहुः । देशकालादीत्यादि । तथाचाङ्गभूतात्प्रधानभूतोऽधिक इति तेनैव चेन्न सुखं तदा अङ्गभूतात्कुतः सुखं भवतीति ज्ञापनायेदमुक्तम् तेन तापनीयोक्ताभ्यो द्वादशमूर्त्तिभ्यो न सुखमिति ज्ञापितम् ॥ २८ ॥

तस्यां त्वित्यत्र । पूर्वोक्ते वेति । यस्मिन् भगवान् स्वावतारार्थं सर्वानंशानाचकर्ष तस्मिन्वेत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ व्रजन्नित्यत्र । कर्मगतय इति । तदेव तत्सहकर्मणैतल्लिङ्गं मनो यत्र निषक्तमस्येति श्रुतेः कर्मगतय एव बुद्धिप्रयत्नस्थानीया इत्यर्थः ॥ ४० ॥ स्वप्ने यथेत्यत्र ॥ श्रुतिसूत्रविरोधपरिहारायाहुः। तदुदित इत्यादि । तथाच लोकबुद्धिमनुसृत्येदमुच्यतेऽतो न विरोध इत्यर्थः ॥ ४१ ॥ यतो यत इत्यत्र ॥ कालकर्मभगवदिच्छानामन्यतर इति । अत्र बहूनां मध्ये एकस्यातिशये विवक्षिते तमप्प्रत्ययोऽपेक्षितस्तथापि महाभाष्ये एतेषु कतरो देवतः कतरो यज्ञदत्तः इति तमुपाधिमनादृत्यैव तरप्योगादत्र तद-

नुसारेणैवमुक्तम् । यत्र लग्नं भवतीति इदं मूलस्थाया आपेतिक्रियायाः व्याख्यानं बोध्यम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ॥ ४७ ॥ ४८ ॥ प्रत्यर्प्यैत्यत्र इदानीं पुत्राणामभावादित्ययं हेतुरर्पणासंभवेऽपि ज्ञेयः । तदा पुत्रसंरक्षार्थं मृत्युरेव । म्रियेतेति । अत्र तदा पदं म्रियेतेत्यनेन सम्बध्यते तदुपपादयन्ति । प्राणिमात्र इत्यादि । एकमृत्युपक्षे मृत्युमृत्युमुपपादयन्ति । एक इत्यादि । इदानीमिति । स्वसहकारिणि कालोपाधौ । अस्मिन् पदे भाक्तं मृत्योर्मरणमित्याशयेनाहुः । अतः शब्दानित्यत्ववदिति । शास्त्रतः सिद्धमपि शब्दनित्यत्वं यथाभिव्यञ्जकस्य वायोर्नाशाच्छब्दाश्रवणे गतमिव भाति एवं मृत्युरपि न यतोऽभिव्यञ्जकस्य सहकारिणः कालोपाधेरभावाच्चगच्छेदेवेत्यर्थः । तत्राहेति । मृत्योरमरणपक्षे तस्मै प्रत्यर्पणमाहेत्यर्थः । श्रीधरव्याख्यानं दूषयन्ति । कंस इत्यादि । दूषणे विशेषप्रयोजनाभावादनुमन्यन्ते अस्तु वा तथेति । ननु तर्हि कंसस्यामरणे तस्मै बालकार्पणं नोचितमित्यत आहुः । सोपीत्यादि । अपि शब्दाद्बालकः तथापीति । कंसस्यामरणेऽपि ॥४९॥ विपर्ययोवेत्यत्र । अतिक्रमितुमिति शक्येति शेषः । एतन्मारणेन निवृत्ते इति । एतत्प्रत्यर्पणोक्तिरूपप्रतीकारात्मकेन मृत्योर्मारणेन कंसान्निवृत्तः स्थानान्तरे गत इत्यर्थः । केचिदिति । श्रीधरस्वामिनः एतस्य विचारस्थ कंसमारणतात्पर्यकत्वे श्रीवसुदेवस्यापि दुराशयत्वं शङ्क्येतेत्यरुच्यापक्षान्तरमाहुः । एतस्यापीत्यादि ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ न चास्यास्त इत्यत्र सम्यगुत्थितामिति । अत्र सम्यगिति कंसाशयं कथनमात्रं ननु मूलस्थपदस्यार्थः ॥ ५४ ॥ ५५ ॥ अथेत्यत्र । आसक्तिर्जातेति । प्रथम चकारार्थः । नवमीति द्वितीयचकारार्थस्तत्ज्ञापकः ॥ सुभद्राज्ञापक इति प्रतिभाति ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥

प्रतियात्वित्यत्र अन्यनिष्ठेति । भगवद्व्यतिरिक्ते सत्यनिष्ठा जातं जातमित्यन्न ॥ ननु लक्षणप्रतिपदोक्तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणं नलाक्षणिकस्येति वैयाकरणाभियुक्तोक्तानियमात् । कथं नास्य कालभेदज्ञापकत्वमिति शङ्कायां तन्निर्वर्त्तकं तर्कमाहुः । अन्यथेत्यादि । तथाच यत्र लक्षणस्य सावकाशता तत्रैव प्रतिपदोक्तस्य ग्रहणम् । यावद्वचनं हि वाचनिकमिति न्यायात् । यत्र तु लक्षणस्य निरवकाशता तत्र न तत्प्रवृत्तिः । यथा पतिताग्निहोत्रप्रतिपत्तिस्मृत्या

शादि शब्दानां ब्रह्मवाचकत्वे । तथाच मीमांसाद्वयसिद्धत्वादत्र लाक्षिणिकग्रहणं नायुक्तमित्यर्थः ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६३ ॥ ६५ ॥ ६६ ॥

आत्मानमित्यत्र । देवपार्ष्णिग्राहेनेति "ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्द्दनेन । ते ते गता विष्णुगतिं प्रपन्नाः क्रोधो हि देवस्य वरेण तुल्य" इति पाण्डवगीतावाक्यविरोधपरिजिहीर्षयेदमुक्तं पार्ष्णिग्राहस्यानुग्राहकत्वेनमार्ये क्रोधाभावात् तच्चार्जुनेन भूरिश्रवसो बाहुछेदे अर्जुनस्य तथात्वं प्रसिद्धं । वस्तुतस्तु कृतप्रयत्नापेक्ष इति न्यायेन तथेत्यापाततो मर्यादाविरोधो न दोषः यद्वा-उक्तवाक्ये प्रपन्ना इति कथनाद्यत्र तदेकतानतारूपा प्रपन्नता तस्यैव मुक्तिर्नान्यस्य क्रोधस्तु वरेण तुल्य इति लौकिकभोगत्वापि चरितार्थो भवतीति न कोपि विरोधः । हिरण्यकशिपुवधे क्रोधस्यापि कथनादिति ॥

इति श्रीमद्वल्लभचरणैकतानश्रीयदुपतितनुजपीताम्बरविरचिते
दशमस्कन्धसुबोधिनीटिप्पण्योः प्रकाशे
प्रथमाध्यायविवरणम् ।



# अथ द्वितीयोऽध्यायः ।

द्वितीयाध्यायतात्पर्यं निरूपयन्त उपजीवकत्वमत्र सङ्गतिरित्याहुः । एवमिति ननूद्यमनिरूपणस्य किम्प्रयोजनमित्याकाङ्क्षायां टिप्पण्याम् । विवृण्वन्ति । भगवदित्यादि । तथाचैवं भक्तवात्सल्यस्वभावं भगवतो ज्ञापयितुं हेतोर्महत्वज्ञापनमित्यर्थः । यद्यप्येवंविधं हेतोर्महत्वं प्रह्लादेऽपि वर्त्तते । परं ज्ञानविशिष्टया मर्यादाभक्त्यापि रक्षितः । प्रकृतेतु तथा नास्तीतिप्रयोजनान्तरमेवोद्यमस्य वक्तव्यं इत्याशयेन प्रकारान्तरमाहुः । अथवाऽन्येभ्य इत्यादि । एतावतापि न पूर्त्तिरध्यायतात्पर्यस्येति प्रकारान्तरमाहुः । अथवा महत्त्वमित्यादि । एते त्रयोपि पक्षाः मूलश्लोकेभ्य एव स्फुटं प्रतीयन्तरतित्रयाणां समुच्चय एव नतु विकल्पः। तेनाथवेत्यत्र वा शब्दोऽवधारणे ज्ञेयः तथाच पूर्वं हेतुमहत्वं ज्ञात्वा तदनन्तरं उक्तप्रकारेण महत्त्वद्वयमवधारणीयमिति बोधयितुमाचार्यैरयं धर्मः श्लोकउक्तइत्यर्थो वाशब्दस्य बोध्यः । सुबोधिन्यामेतदेव स्पष्टी कुर्वन्ति । दुःखहेतुरित्यादि । इह प्रपञ्चे आगन्तुं भगवदागमनाय भक्तानां दुःखहेतुरिति बोधाय तत्कथादुःखकथा शीघ्रगमनहेतुका शीघ्रागमनकारणजन्या पुनः स्पष्टा निरूप्यत इत्यर्थः । एतेन महत्वेत्यर्द्धस्य प्रथमोर्थः स्फुटीकृतः । द्वितीयार्थं स्फुटीकर्त्तुमाहुः। सर्वेषामित्यादि । तथाच सर्वेषां दैत्यानां भगवदवतारज्ञापनार्थं आहैष मे प्राणहरो हरिर्गुहामित्यादिकंसवाक्यमवतारान्तरेभ्योऽत्राधिक्यबोधकमित्यर्थः तृतीयं स्फुटी कुर्वन्ति।तथास्तुतिरित्यादि। स्तुतिः ब्रह्मादिकर्तृका तथा पुरुषोत्तमत्त्वज्ञापिका । अन्यथा स्तुत्यादिकं न कृतं स्यात्तदा पुरुषोत्तम एव प्रादुर्भूत इति कथा निश्चितं भवेदित्यर्थः ॥ १ ॥ २ ॥ ३ ॥

टिप्पण्यां हतेष्विरयत्र । आसुरहननमिति । षट्पुत्रहननं केशिन्यां हिरण्यकशिपुभार्यायां हिरण्यकशिपुपुत्रत्वेनासुरत्वादिति । सुबोधिन्यां सप्तमो वैष्णवत्वमित्याभासे । बुद्ध्येति भगवद्बुध्या धर्मस्थानभूत इति कंसहतानां धर्माणां स्थानभूतः एतेनैतेषामक्षरधर्मत्वं बोधितं पुरुषोत्तमधर्माणामनिवार्यत्वादिति । नचाऽऽसन्मरीचेः षट्पुत्रा इत्यादिगुणप्रकरणीयसन्दर्भविरोधः । तदैवैतत्प्रकारेण भवतीति

श्रुतेर्मतमितिसिद्धान्तात् क्षरधर्मतयाऽक्षरस्येनादोषात्। विवृत्तौ परमावधिरिति आनन्दमीमांसोक्तोत्कर्षस्य परमावधिरित्यर्थः। तदेव विवृण्वन्ति। षडित्यादि महत्वज्ञापनपरिकरामिदं ज्ञेयम् ॥ ४ ॥

भगवानित्यत्र दयास्थापितेति। प्रपञ्चोर्पितया भृशमिति तृतीयस्कन्धे स्पष्टमिदं प्रतीकारो न भविष्यतीति। परमानन्दप्राकट्याभावे सर्वदुःखनिवृत्तेरभावादित्यर्थः। येत्यादि। द्वितीयस्कन्धनवमाध्यायसुबोधिन्यां स्पष्टमिदं केवलामिच्छयैवेत्यादि। सवै नैव रेमे इत्यादिश्रुतिषु सतपोऽतप्यतेत्यादिसाधनान्तरनिर्देशदर्शनाद्भगवान् समर्थोपि स्वीयेच्छायां द्वारान्तरमन्यत्सम्पादयतीतिनिश्चितं तथात्र योगमायासमादेश इतिनानेन कापि हानिरित्यर्थः ॥ ५ ॥

गच्छदेवीत्यत्र नवभिरिति। अत्र प्रथमश्लोकः षट्पदीरूपो ज्ञेयः। रोहिणीत्यत्र। किमितितिष्ठतीति। रोहिणीति शेषः। आकाङ्क्षार्थमिति अर्थोनिवृत्तिः मशकार्थो धूम इति वत्। आकाङ्क्षाया अर्थो यस्मात्तादृशमित्यर्थः ॥ ६ ॥ ७ ॥

अथेत्यत्र अयमित्यादिसन्दर्भस्यायमर्थः। कंसभयाभावमात्रं नावतारप्रयोजनमपि तु सेवाकारणं साचानेकविधेतिअसम्बन्धिनीच न सर्वफलदेति स्वावतारणावश्यकत्वमिति। विभागे नेति चतुर्विधकार्याचरणकृतो यः स्वरूपव्यूहविभागस्तेनेत्यर्थः। एकवचनमित्यादि। युवां वै ब्रह्मणादिष्टावित्यादि भगवद्वाक्यैः पृष्णिसु तपोभ्यां प्रजासर्गसम्पादकपुत्रार्थवरप्रार्थनावगमात्तदर्थे तत्कर्त्तुः प्रद्युम्नस्यैवौचित्यात्तथेत्यर्थः। भूम्यादेर्वैश्चभूभारहरणार्थमर्थितत्वात्तदर्थे यदा यदाहीति गीतावाक्याद्धर्मरक्षार्थे नावतारआवश्यको मोक्षार्थे ज्ञानोपदेशार्थश्चेति सङ्कर्षणानिरुद्धवासुदेवानामप्यवतरणं न तु तेषां पुत्रता तथा स्वस्यापि ऐक्यभ्रमादेव लोकानां परं तथा प्रतीतिर्भवित्रीति भगवदिच्छा तथाच यथा परशुरामे उभयोर्ब्राह्मणत्वक्षत्रियत्वयोर्निर्विशेषेऽपि ब्राह्मणत्वेनैव पुत्रत्वं भार्गवत्वात्। क्षत्रियत्वस्य तु युद्धएव प्रादुर्भावः प्रहारः क्षत्रधर्मस्येत्युद्योगपर्वीयभीष्मवाक्यात्। तामुद्घाटयन्ति। पुत्रतामित्यादि ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

रामेतीत्यत्र। असंमत्यर्थ इति। स्वरमणस्थानत्वेनैव रामत्वं भगवत्सम्मतं नतु लोकरमणादिति तथेत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥

आविवेशत्यत्र। केचित्वित्यादिना यन्मतान्तरमुक्त तदेव कुतो

नाद्रियत इत्याकाङ्क्षानिरासस्तु भगवद्वाक्यस्थांशभागपदस्य करणी-भूतस्योपादानाच्छुकेनैव भगवदावेशबोधनात्कृत इति चतुर्व्यूह-रूपेणैव भूमौ पुरुषोत्तमप्राकट्यं।ननु मूलरूपेणेति शङ्कास्यात्तन्निरासा-याहुः। पुरुषोत्तमस्त्वित्यादि। मानाकाक्षायां श्रुतार्थापत्तिं प्रमाणय-ति। अन्यथेत्यादि। नन्वत्र प्रादुर्भावो नोच्यते प्रकरणाभावात्। किन्तु श्रीयशोदादिप्रतीतिरेवानूद्य ततो नेदमत्रमानमित्याकांक्षाया-माहुः।माययेत्यादि। तृतीयाध्याये रूपान्तरं यदुक्तं तन्मायाकरणकं-तस्य करणभूतामाया च चतुर्थाध्याये अदृश्यतानुजाविष्णोरित्यने-नानुजात्वेन रूपिता सच शब्दो रूढः सोदरत्वलक्षणसामानाधिकर-रण्यमन्तरेणानुपपद्यमानस्तत्सोदराग्रजत्वेन भगवन्तं गमयति तदेव पूर्वोक्तवाक्यात् नितरां न्युपोद्बलयति। नचानुजत्वं केनाप्य-वतारकालीनेनावगतं येन तत्प्रतीत्यनुवादत्वं वक्तुं शक्येत यतो यादिदं शुकेनोक्तं। तन्नन्दग्रहे भगवतो मायाश्पतुः शक्तिसाहि-त्येन भगवतः प्रादुर्भावबोधनार्थमेवोक्तमिति निश्चयः। एवं चांश-भागेनोत्पाद्य कथनादत्र केवल एव प्रादुर्भूत इति सिद्धोऽर्थस्तदेतदु-क्तं माययेत्यादिना अयमेव शुकस्याशय इति दृढीकरणार्थमाहुः। उत्पत्तेरित्यादि। अन्यथा उत्सवस्य राज्ञा अदृष्टत्वाच्चतुर्थाध्यायोत्तरं व्रजे वसन् किमकरोदित्यस्योत्तरभूतपूतनामोक्षादिकमेव वदेन्नतु सं-भ्रमं। अतएतदुपोद्घातत्वेनैव तस्योक्तिरिति शुकस्यायमेवाशय इत्यर्थः। अतः परमेकारूपद्वयदर्शनापत्तिशङ्काऽवतिष्ठते तामपाकर्त्तु-तामनुवदन्त एवास्य भावं टिप्पण्यामाहुः। अत्रायं भाव इत्यादि। ननु नन्दग्रहआविर्भूतस्यैव तिरोधानं वाच्यमतआहुः। प्रागित्यादि-कार्यमिति। अविहितभक्तिरसानुभावनरूपं नाट्यरूपञ्च कार्यं। स इति कार्यार्थः प्रादुर्भावः। एवञ्चैकदेवोभयत्र प्रादुर्भावः पञ्चाध्याय्यामिवेति ज्ञाप्यते। रूपद्वयदर्शनापत्तिस्तु दर्शनस्य स्वे-च्छाधीनतयैव परिछेदाऽवभानवत्परिहृताज्ञेया। नन्वस्य रूपान्तरत्वेन भासमानस्य पुरुषोत्तमत्वेऽनेन व्यूहकार्यकरणासम्भ-व इत्यत आहुः। पूर्वेत्यादि। एतेनैव मतान्तरानादरणे बीजमप्युक्त-प्रायं।ननु बभूव प्राकृतः शिशुरित्यनेनोक्तस्य पुरुषोत्तमरूपत्वे किंमानं मायाकरणकं रूपान्तरमतआहुः। रूपान्तरेत्यादि। तथाच मूले प्रा-

---

१ समीपे स्थितापि तासामदर्शनम्। २ अपरिछिन्ने भगवति परिछिन्नत्वेन ज्ञानवत्।

कृतपदस्यायमेवाशयः । तदेव विवृण्वन्ति । तथाचेत्यादि । तन्नियतकार्यविषयस्येति । अन्यथा भानविषयस्य मानुषत्वस्येत्यर्थः । अत्रेऽदं सम्पद्यते। मातृप्रार्थनया चतुर्व्यूहरूपं तिरोधाप्य प्रादुर्भूते पुरुषोत्तमरूपे यन्मनुष्यतया प्राकृतत्वभानं सम्पादितवान् तेन शुक्तौ वृतिरूपस्य रजतस्येव स्वस्मिन् प्राकृतमनुष्यत्वस्याप्युत्पत्तिर्निरूपितेति तात्पर्यम् ॥१५॥१६॥१७॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

सत्यव्रतमित्यत्र । स्तुतिश्लोकसंख्यातात्पर्यं वदन्तो निबन्धे सङ्कर्षणोत्पत्तिर्द्वितीयाध्यायार्थो दैत्यवधार्थत्वस्य स्फुटत्वादिति यदुक्तं तदत्र प्राहैष मे प्राणहरो हरिर्गुहामित्यनेन कंसस्यापि सङ्कर्षणस्य ज्ञानकथनाद्यथा स्फुटं तथा स्वरक्षकत्वं देवानां ज्ञानादपीति ज्ञापयितुमाहुः। कालात्मेत्यादि । भगवान् पुरुषोत्तमः प्रश्नोपनिषदि षोडशकल इति श्रावणात् कलाभिः कालात्मा जात इति ज्ञापयितुं तथास्तुतिः षोडशभिः स्तुतिरित्यर्थः । अत्र प्रकारमाहुः स्वपक्षख्यापकैः पञ्चदशभिर्हि एषा देवानां हितकारिणी पक्षपातस्तुतिः । षोडशी ध्रुवा भक्तहितकारिणी स्वभाविकत्वान्निश्चलेति । ननु भवत्वेवं तथापि षोडशकलत्वेन कथं कालावगम इत्यत आहुः । वृद्धौ वा तादृशो भवेदिति । वा शब्दोऽवधारणे । तथाच तिथिवृद्ध्या तदवगम इत्यर्थः । एतदेव स्फुटी कुर्वन्ति । अत्रेत्यादिना । तथाच स्तुतिसान्त्वनरूपविधाभेदाद्वैविध्येऽपि सान्त्वनश्लोके परः पुमानित्यादिकथनात् षोडशानामपि भगवत्स्तुतित्वमेव यदि च पुरुषोत्तमस्य गर्भसबन्धाभावान्नैतेषां साक्षात्पुरुषोत्तमस्तुतित्वं तदातु षोडशभिः कालात्मकस्यैव स्तुतिरिति सिद्ध्यति । तत्र पञ्चदशभिः कालात्मकस्तुतिं व्युत्पादयन्ति । कालइत्यादि । अर्द्धेन निरूप्यत इत्यन्तं अर्द्धेनेति । त्रिंशदर्द्धेन तर्हि षोडशभिः कथं स्तुतिरित्यतस्तांव्युत्पादयन्ति । सचेत्यादि चतुर्द्धेत्यन्तं सचेति चावधारणे सइति । षोडशभिः श्लोकैरुक्तः । तेनेदं सिध्यति । आध्यात्मिके द्वापरादिरूपे काले विपक्षे सति तत्कार्यप्रतिबन्धार्थं कृपया भगवानाधिदैविककालरूपोऽभवत्तदंशैर्लोकादिभिर्लोकादिविभाजकप्रमाणाद्युपाधिभिश्च पक्षपातीजात इति । एवं षोडशधाविभागमुपपाद्य तत्प्रयोजनमाहुः । दैत्यकृतादि । दैत्येषु कृतादुपकारात् स्वपक्षपातस्याधिक्यं वक्तुमत्र षोडशधोच्यत इत्यर्थः।लोककृतं चातुर्विध्यं विभजन्ते।तत्रेत्यादि। एतस्यैव

विवरणं लोकसिद्धानीत्यादि।सत्यमिति।सत्यभाषणं तद्विषयश्च यथार्थः । साधनानीति जगदुत्पत्त्यादि साधनानि । एतावदेव दैत्यपक्षेऽपि तुल्यं । अथ देवपक्षे विशेषं वक्तुमाहुः । तत्रापीत्यादि । लोके प्रमाणादावपि दैत्यपक्षव्यतिरेकश्च दैत्यपक्षाद्वैलक्षण्यम् । भगवत्त्वेनैव सत्यं प्रमाणं भगवत्त्वेनैव जगत्प्रमेयमित्यादिरूपेण साधनीय इत्यर्थः । एवं प्रतिज्ञाय प्रथमतः प्रमाणे तमाहुः । तत्रेत्यादि । सत्यमिति । सात्विकज्ञानविषयं कालत्रयेप्यबाधितं अनृतमिति । राजसंज्ञानविषयम् । व्यावहारिकं गुणसन्निपातकार्यम् । अत इति । देवपक्षपातात् । एतेन मायोपहितो गुणाधीनः कार्येश्वरश्चानृतरूपो निवारितः । एवं श्लोकतात्पर्यमुक्त्वा तत्र स्थितानामष्टविशेषणानां तात्पर्यमाहुः । सत्यमपीत्यादि । अष्टविधत्वादिकं कथमित्याकाङ्क्षायां टिप्पण्यामाहुः । अष्टविधत्वमित्यादि । अग्रे इति । विशेषणत्रयव्याख्यानोत्तरमष्टाविधत्वं चकारात् सत्यस्य सत्यमित्यस्य व्याख्यानोत्तरं प्रमाणादिचतूरूपमित्यादिना त्रयोदशविधत्वत्रिविधत्वाभ्यां षोडशविधत्वं च स्फुटी भविष्यतीत्यर्थः । तेनैकैकस्मिन् विशेषणे प्रत्येकं विधाद्वयमित्येवं षोडशविधत्वं नोच्यते । किन्तु प्रकारान्तरेणेति सूक्ष्मेक्षिकया सुबोधिन्यामंशतः षोडशविधमित्यनेन उपपत्त्युत्पत्तिरूपाभ्यां निरूपणे स्फुटी भविष्यतीति बोधितं ज्ञेयम् । नच पुरस्फुर्त्तिकमष्टविधत्वं विहायांशतः षोडशाविधत्वं निरूपणे कुत आग्रह इति शङ्क्यम् । स्तुतौ सत्यविधाः बोधकानां श्रुत्युक्तानां प्रत्यभिज्ञानेन तत्सामानाधिकरणबोधनार्थत्वात् । एतद्बोधनार्थमेव सुबोधिन्यां वेदे । सत्यमित्यादिना । श्रुतितात्पर्यमुक्तम् । श्रुतिद्वयं च यदुपन्यस्तम् । तद्व्याख्यानग्रन्थएवाग्रे स्फुटी भाविष्यति अतस्तत्तात्पर्यमनुक्त्वा यत्सत्यमित्यादेस्तात्पर्यमाहुः । यत्सत्यमित्यादिवाक्यालङ्कार इत्यन्तं एतत्कथनप्रयोजनमाहुः । श्रुताविवेत्यादिना । तथाच यथा त्वं अहमस्मि भगवो देवते अहं वै त्वमसीति जाबालश्रुतौ त्वं व्यापक पराग्विात्ति वेद्ययोस्त्वमहं पदार्थयोर्व्यतिहारेण भगत्वादैक्यप्रतिपादनम् । तथास्यामपि श्रुतौ सत्यम्परं सत्यमिति वाक्यस्थव्यतिहारेण परसत्ययोः केनचिद्रूपेणैक्यं प्रतिपाद्यते तथा सति येन रूपेणास्यां श्रुतावैक्यं प्रतीपादनीयम् ।

एवमनेन प्रकारेण सत्यत्वसर्वोत्कृष्टत्वयोर्भिन्नप्रतीति विषययोरपि ऐक्यं स्तुतौ प्रतिपादनीयमिति सुबोधिनीफक्किकार्थो ज्ञेयः। सुबोधिन्याम्। एवं विधाद्वयं व्याख्याय तृतीयां व्याकुर्वन्ति। अत एवेत्यादि। यतः सत्यपरयोरैक्यं अतस्तथेत्यर्थः। तुरीयां व्याकुर्वन्ति। ऐहिकेऽपीत्यादि। अत्र सतां सत्यमिति श्रुतिवाक्यं साकाङ्क्षं तन्मूलं फलमिति पदद्वयेन पूरितम्। तथाच सतां सत्यमेव मूलं सत्ताप्रयोजकं अतस्तदेव फलमित्यर्थः। पूर्ववाक्यआमुष्मिकफलस्य कथनेनात्र ऐहिकफलग्रहणस्यौचित्यात्। प्राजापत्यो हारुणिरिति द्वितीयश्रुतौ तथैव ऐहिकफलस्य सिद्धत्वाच्च। पञ्चमीं व्याकुर्वन्ति। अत इत्यादि। यतः यथार्थत्वादबाधितत्वाच्च सतां सत्यमेव प्रतिरूपम्। इतिहेतो उक्तविधाः सत्ये एव रमन्ते क्रीडन्ति रताभवन्तीत्यर्थः। द्वितीयश्रुतिस्तु न व्याख्याता तदुपन्यासप्रयोजनं त्वग्रे वाच्यं। तदत्रापि निरूप्यत इति। श्रौतं पञ्चविधत्वं स्तुतावपि निरूप्यत इत्यर्थः। श्रीभागवतस्थं सत्यवृतं वाक्यं व्याकुर्वन्ति। लोकेहीत्यादि। टिप्पण्यां यस्त्वित्यादि नोच्यत इति। यस्तु यत्किञ्चनव्रतमातिष्ठति स पर इत्युच्यते। तथा सत्यमपीत्यन्तेनोच्यत इत्यर्थः। सुबोधिन्यां। तथासत्यमपीति। अत्र आतिष्ठतीत्यन्तं वाक्यं पुनरावर्त्तते इति बोध्यम्[1]। तथाचैतयोराश्रयाल्लोके परत्वकथनेन श्रुतौ परशब्देनोभयसंगृह्यत[2] इत्यर्थः। तदेतत्प्रकृते योजयन्ति। भगवतस्तूभयं सत्यमिति। यत्सत्यं यथार्थम्। तत् उभयं सत्यं व्रतं चेति द्वयम्। भगवत्स्वामिकं यत्पुनर्दम्भादिना कृतमयथार्थं तद्भगवत्स्वामिकं न। तथाच श्रुतौ यथार्थत्वादेवोत्कृष्टतया परत्वमितीस्तुतावपि सत्यमुद्दिश्यैवं परत्वविधानाच्छ्रौतार्थसामानाधिकरण्यमेवेत्यर्थः। नच बहुव्रीहौ चित्रगुलम्बकर्ण इत्यादिषु प्रथमनिर्दिष्टयोर्लम्बचित्रयोरेव विधेयत्वदर्शनात्सत्यव्रतपदेऽपि सत्यस्य विधेयत्वं शङ्क्या कुटादिर्ब्राह्मणादयः शूद्रदासोत्तराः प्रजा इत्यादौ व्यभिचारदर्शनेन ( प्रथमनिर्दिष्टस्यैव विधेयत्वं ) तथा नियमाभावात्। तदेतत् टिप्पण्यां निगमयन्ति[3]। लोकेहीत्या-

---

१ यथा व्रते आतिष्ठति तथा सत्ये आतिष्ठति सोपि परेत्यर्थः।

२ व्रतंसत्यञ्च

३ दृष्टान्तेन बोधयन्ति।

दि । निरूपितं भवतीति । परत्वरूपेणोक्तं भवतीत्यर्थः । सुबोधिन्याम् । एवं सत्यपदस्यार्थं व्याख्याय तस्मात्सत्ये रमन्त इति श्रुतितात्पर्यबोधनाय पदसम्बन्धमाहुः सत्यमित्यादि । तथाच सत्ये रताः शरणं प्रपन्नाः ननु भयादिनेत्यर्थः । एतेन हृष्टाः स्तुवन्तीति श्रीधरोक्तमवतरणमादृतं ज्ञेयम् । एवं पदसम्बन्धमुक्त्वा लोके हि व्रतमित्यादिना यदुक्तं तन्निगमयन्ति । एवमित्यादि तद्विवृण्वन्ति टिप्पण्याम् । मूलइत्यादि । तथाच व्रतपदं स्वशक्यस्य परत्वेन सम्बन्धेनाजहत्स्वार्थया सत्यमपि प्रापयतीति परत्वमुभयप्राप्तौ हेतुरित्यर्थः । तेन सिद्धमाहुः सत्यं व्रतमित्यादिना । द्वैविध्यमित्यन्तेन । अत्र व्रतपदेनोक्तायां विधेयकोटौ यद्व्रतं सत्यं चोक्तं तयोः स्वरूपमनुपदमेव व्रतद्वयपोषणादिना टिप्पण्यां स्फुटिष्यति । तथाचैवं व्याख्यानेन श्रुतौ सत्योद्देश्यकापराविधेयकाविधा या उक्ता सा बोधितेत्यर्थः अग्रिमं पदं विवृण्यन्तीत्याहुः अग्र इत्यादि । अत्रापि सत्यपरपदेऽपि लोके लौकिकं नियामकम् । सुबोधिन्यां यत्परं लोक इत्यनेनोक्तम् । वैदिकं द्वादशविधं च सुबोधिन्यां वेदेचेत्यारभ्य संन्यासश्चेत्यन्तेनोक्तम् इति द्वैविध्यम् एवं प्रकारकद्वैविध्यमित्यर्थः । तेनात्र नियामकत्वं परशब्दार्थः स्फुटति । तच्च यथाशास्त्रं प्रणयिमानदण्डनीतीत्यादिरूपम् । दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् इति गीतादिवाक्यात् । द्वादशविधस्य परत्वं तु श्रुतौ किं भगवन्तः परमं वदन्तीति प्रश्नेन तदुत्तरेण च परमत्वेनोक्तत्वं तदेतत्सुबोधिन्यां स्मारयन्ति । अत्र श्रुतिरित्यादि । सा तु सत्येन वायुरावलति सत्येनादित्योरोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्तीति । एवं तपः आदीनामपि श्रुतिर्बोध्या । अर्थस्तु । सत्येन पूर्वजन्मीनसत्यभाषणेन मनुष्यत्वाद्देवतारूपत्वं प्राप्यलोकोपकारार्थं वायुर्भूत्वा आवाति । एवमादित्योपि दिवि रोचते प्रकाशं करोति । सत्यमेव वाचः वागिन्द्रियस्य प्रतिष्ठास्थिरं स्थानं अनृतं तु न तथा । सत्ये यथार्थभाषणे सर्वं व्यवहारजातं प्रतिष्ठितम् । तस्माद्धेतोः सत्यं परममुत्कृष्टं साधनं वदन्तीति । अत्र प्रथमे वाक्यद्वये आमुष्मिकफलोत्कर्षः सिध्यति । तदाग्रिमवाक्यद्वये चैहिकफलोत्कर्षः । एतदाभिप्रेत्यैव प्रथमश्रुतौ सतां सत्यमित्यत्रैहिकं फलं व्याख्यातम् । भगवद्व्रतानां परत्वं

तु असाधारणत्वादेव स्फुटं शेषस्य भगवन्नियामकस्य परत्वं सुबोधिन्यामेवोपपादितमित्याशयेनाहुः। टिप्पण्यां भगवतो व्रतमित्यादि। तथा सति परपदेन विधाचतुष्कसंग्रह इति भावः। एवञ्च मूले सत्यपरपदे सत्यं परं यस्येति बहुव्रीहौ लम्बकर्णादिवत्पूर्वनिर्दिष्टस्य विशेषणभूतस्य सत्यस्य विधेयत्वं परपदोक्तस्य चतुर्विधस्य नियामकादेरुद्देश्यत्वं बोध्यम् एवमत्रश्रुत्युक्तव्यतिहारबोधकं मूलस्थं पदद्वयं विवृतम्। व्यतिहारफलमैक्यंत्वग्रे विवेचनीयं लोहितत्र इत्यादिना सुबोधिन्यां त्रिसत्यपदं विवृण्वन्तीत्याशयेन तत्सिद्धं विधाय द्वयमष्टविधत्वपूरणाय स्फुटी कुर्वन्ति। त्रिसत्यमित्यादि। स्पष्टार्थमिदम्॥ सुबोधिन्यां त्रिसत्यपदतात्पर्यमाह। अनेनेत्यादि। त्रिसत्पदेन साधनफले सत्येन "न स्वर्गाल्लोकाच्यवन्त" इति श्रुत्युक्तं साधनम्। सतां हि सत्यमिति श्रुत्युक्तं फलं च त्रिसंख्यासामान्येनैकीकृत्य निरूपितमित्यर्थः। श्रुत्युक्तानां स्वोक्तानां च विधानां पूरकं रूपं स्फुटी कुर्वन्ति। एवमित्यादि। उपपत्तिरूपं इति। उपपत्त्या रूप्यते तादृश इत्यर्थः॥ टिप्पण्यां कथमुपपत्तिरूपत्वमित्याकाङ्क्षायां विवृण्वन्ति। भगवत इत्यादि उपपत्तिरूपत्वमित्यन्तेन। आदिकमित्यनेन सत्यस्य संग्रहः। व्रतानि चेति। चेनभगवन्नियामकसत्यस्य संग्रहः। तथाचोक्तरूपयोपपत्त्या निरूप्यत्वादुपपत्तिरूपत्वमित्यर्थः। सुबोधिन्यां सत्यव्रतपदव्याख्याने सत्यपरपदव्याख्याने च व्रतसत्ययोः प्रविष्टत्वात्तयोरभेदे परपदोक्तनियामकयोश्चाभेदे विधाष्टकपूर्त्तिदुर्घटेति तदभावाय तेषां स्वरूपमाहुः। व्रतं हीत्यादि। एवं सत्यव्रतपदं विवृतम्। यत्र सिद्धं यत् व्रतं सत्यं च तत्प्रमाणभूतं बोध्यम्। भगवत्सम्बन्धिना तादृशेन लौकिकव्रतेन सत्येन च कर्तृनिष्ठधर्मप्रमितिजनादिति। अन्यत्स्पष्टमिति। यत्परं लोक इत्यादि सुबोधिनीस्थ लोके लौकिकं नियामकमित्यादिना विवृतत्वात् स्फुटमित्यर्थः। तदेतत्संगृह्णन्ति। लौकिकमित्यादि लौकिकमिति। नियामकमिति शेषः। नियामकं चेति। देवहितकारिणो नियामकं चेत्यर्थः। इदं चतुर्विधं सत्यं प्रमेयभूतं बोध्यम्। स्मार्त्तवैदिकभगवदीयवाक्यैः प्रमितत्वादिति। एवं षड्भेदापि श्रौते विधेयकोटिशा-

१ लौकिकस्य परत्वं वैदिकस्य परत्वं भगवद्व्रतानां परत्वं लौकिकव्रतस्य भगवन्नियामकस्य परत्वम्।

पिते । त्रिसत्यपदोक्तं विधाद्वयं व्याकुर्वन्ति । लोका भूर्भुव इत्यादि । लोकाः फलरूपा इति । पुरुषार्थत्वेन प्राप्यत्वात् फलरूपाः । इतरे- त्वितराणीति । कायादयस्तु वस्तुतस्साधनशेषत्वात्साधनानि । इदं च द्विविधमिति । त्रिसत्यपदे त्रिशब्देनोक्तं द्विप्रकारकमित्यर्थः । एवं विधाष्टकं निगमयित्वा त्रिसत्यपदसुबोधिन्याम् । चतुर्द्धेति । यदुक्तं तन्निगमयन्ति । एवमष्टेत्यादि । एवमष्टविधत्वं सत्यस्य उक्त- भेदेन उक्तरीत्या संग्रहीतो यः षोढाभेदस्तेनेत्यर्थः । चतुर्विधत्वं नि- गमयन्ति । पदद्वयेत्यादि । सत्यव्रतं सत्यपरमिति पदद्वये यो विधेय- भेदस्तेन द्वैविध्यम् । प्रमाणप्रमेयत्वाभ्यां द्विविधत्वम् । त्रयं त्रिसत्य- पदे त्रिशब्देनोक्तं द्विविधम् । फलसाधनभेदेन द्विप्रकारकम् । तथा- चैवं मूलस्थैः त्रिभिः पदैः श्रौतं चतुर्विधत्वं समर्थितं ज्ञेयमित्यर्थः । सुबोधिन्याम् । नन्वेवं श्रौते चातुर्विध्ये स्वोक्तेऽष्टविधत्वे च समर्थि- ते शेषाणां पञ्चानां विशेषणानां किम्प्रयोजनमित्याकाङ्क्षायां श्रौतव्य- तिहारफलभूताऽभेदसाधनं स्वोक्तषोडशविधापूरणं च प्रयोजन- मित्याशयेनाहुः । उत्पत्तिरूपमित्यादि । उत्पत्त्यरूप्यते निरूप्यते ता- दृशं पञ्चभिर्विशेषणैर्निरूपयतीत्यर्थः । तत्र प्रथमविशेषणं व्याकुर्वन्ति यत्पूर्वमित्यादि । श्वो न भवेदिति । द्वितीयदिनात्माकालो यदि भग- वता नोत्पादितो भवेत् । तथाचाष्टविधं सत्यं भगवदुपादेयत्वाद्वाक् सत्यत्वप्रयोजकमित्यर्थः । अग्रिमविशेषणमष्टमप्यंतिदिशन्ति । एवं सर्वत्रेति । निहितं च सत्य इत्यादिविशेषणेष्वप्यष्टविधं सत्यं त- त्तदुक्तेन धर्मेण तत्कार्यप्रयोजकं ज्ञेयमित्यर्थः । अग्रिमपदं व्याकुर्व- न्ति । न केवलमित्यादि तत्तात्पर्यमाहुः । अनेनेत्यादि । विशेषणच- तुष्टयानन्तरवर्त्तिना निहितं च सत्यं इति विशेषणेनाष्टविधसत्यस्यो- त्पत्तिप्रयोजनविचारेऽष्टविधं सत्यं भगवद्रक्षितत्वेन प्रमेयम् । भगव- दधिष्ठितत्वेन स्वस्वकार्यसाधनं चोक्तम् । नह्यरक्षितं प्रमातुं शक्यते । न वा भगवदनधिष्ठितं स्वस्वकार्यं साधयितुं शक्नोति । गामाविश्य च भूतानि धारयाम्यहमोजसेत्यादिवाक्यैस्तदाभिध्यानादेव तु तल्लिङ्गात्स इति न्यायेन च भगवदधिष्ठितस्यैव कार्यरक्षत्वेन सिध्यत्वादि- त्यर्थः । ननु यद्येवं तर्हि प्रमाणफले कुत्रोक्ते इत्यत आहुः । इतरा-

१ स परमात्मा आकाशादिरूपेण वाय्वादीन्सृजेति । तल्लिङ्गात् । कर्तृत्वं ब्रह्मणो लिङ्गं तस्मात् । तर्हि कथमाकाशाद्युपादानं तदभिध्यानात् । तत्तत्कार्यार्थं तदात्मकत्वं भगवतस्तस्मात् ।

वाद्यन्तयोरिति। एतस्यार्थष्टिप्पण्यां वक्तव्यः। नन्वितरावाद्यन्तयोरुच्येते इत्यत्र किं गमकमित्यत आहुः। चकार इत्यादि। निहितं च सत्य इत्यत्र चकार उक्तं समुच्चयन्निरर्थकः स्यादित्यनुक्तं प्रमाणफलसमुच्चयरूपमर्थमाह। तथाच चकार एतद्गमक इत्यर्थः। इतराद्यन्तयोरिति यदुक्तं तट्टिप्पण्यां प्रकारद्वयेन विवृण्वन्ति। इतरावित्यादि। अत्र प्रमाणेत्यारभ्य प्रसिद्धे इत्यन्तमेकप्रकारम्। अथवेत्यारभ्य इत्यादिनेत्यन्तो द्वितीयः। तत्र प्रथमे प्रकारे सत्यस्य योनिमिति विशेषणं सत्योत्पत्तिमात्रबोधकम्। नतु विधासंग्राहकम्। द्वितीयं तु प्रमेयसाधनबोधकमिति सुबोधिन्यां स्पष्टम्। तृतीयं प्रतिष्ठितत्वबोधकम्। अस्मिन् पक्षे सुबोधिन्युक्तस्य यथापूर्णेत्यादि ग्रन्थस्य विरोध इत्यरुच्या पक्षान्तरमाहुः। अथवेत्यादि। ननु योनिशब्दस्य कारणवाचकत्वादत्र प्रमाणनिरूपणं कथं सङ्गछत इत्याकाङ्क्षायां सत्यस्य योनिमित्यनेन प्रमाणनिरूपणे प्रकारमाहुः। मानेत्यारभ्य मानमित्यन्तम्। विवृताविति सुबोधिन्याम्। नन्वेवं सुबोधिन्याविरोधेन प्रमाणफलयोः सिद्धौ पूर्वोक्तप्रकारलिखनस्य किम्प्रयोजनमिति चेदुच्यते· योनिशब्दस्य कारणे निर्गूढत्वादत्र च सत्यकारणत्वेनैव प्रयोगात्तस्य कारणत्वेन सङ्कोचने मूलविरोधापत्तिः। सत्यस्य सत्यमिति विशेषणस्य फलबोधकताङ्गीकारेऽजहल्लक्षणापत्तिमूलविरुद्धः पक्षः सुबोधिन्यां कुत आदृत इति चेदत्राप्युच्यते। योनिशब्दस्य प्रमाणपदत्वं शास्त्रयोनित्वादित्यत्र भास्कररामानुजाचार्याभ्यामादृतम्। प्रकृते च भगवतो योनित्वकथनेन सत्यस्य तदुत्पन्नत्वं साधितं अतस्तेन धर्मेण सत्यं प्रमाणमिति कथने को वा मूलविरोधः। किञ्च सत्यस्य सत्यमिति विशेषणे भगवतः सत्याधिदैविकत्वमुक्तम्। तत्र प्रतिष्ठितत्वेन रूपेण सत्यस्य फलत्वकथनेऽपि को वा मूलविरोध इति जानीहि। एवं च पुरस्फुर्त्तिकमादाय प्रथमः प्रकारः। सूक्ष्मेक्षणमादाय द्वितीय इति टिप्पण्यां न कोपि दोषः। सुबोधिन्यां सत्यस्य सत्यमिति कथनेन कथं लयस्य बोध इत्याकाङ्क्षायामाहुः। यथेत्यादि। यथा पूर्णमदः पूर्णमिदमिति मन्त्रे पूर्णशब्दवाच्यस्य प्रपञ्चस्य स्थित्युत्पत्ती उक्ता पूर्णस्य पूर्णमादायेत्यनेन स्वजनके आधिदैविके पूर्णे ब्रह्मणि कार्यस्य लय उच्यते। तथात्रापि सत्यस्योत्पत्तिस्थितीपूर्वविशेषणाभ्यामुक्त्वा अत्र

सत्यस्याधिदैविकं सत्यमिति बोधनेनोत्पत्तिस्थिति प्रसङ्गादेर्लय उच्यत इत्यर्थः । तर्ह्यत्र कथं फलबोध इत्यत आहुः । सत्य एवेत्यादि । प्रलयो हि कारणे प्रवेशरूप इति कार्यं सत्यं कारणभूते सत्ये प्रतिष्ठितं भवति तच्च भगवानेवेति तेन रूपेण सत्यं फलमित्यर्थः । तदुपपादयन्ति । अनेनेत्यादि । उक्तमित्यन्त अनेन प्रकारेण फलमुक्तमित्यर्थः । एवं विशेषण त्रयोक्त्या विधा पञ्चकसिद्धिं निगमयन्ति । एवमित्यादि अष्टविधस्य सत्यस्यानेन प्रकारेणोत्पत्यादिप्रसङ्गे प्रतिष्ठितत्वस्यापि सिद्ध्या तदादायपञ्चविधं सत्यमुक्तमित्यर्थः । अनेनैव त्रयोदशत्वस्यापि सिद्धिमाहुः । एतावतेत्यादि । क्रियाशक्तिरितिक्रियाजनकं क्रियात्मकं चत्र गवत्सामर्थ्यम् । अत्र क्रियाशक्तेस्त्रयोदशविधत्वमेवं ज्ञेयम् । व्रतसत्ययोर्धर्मानुमापकत्वात् प्रमाणकोटिपातेऽपि कर्मरूपत्वात् क्रियारूपत्वं प्रमेयरूपाणां चतुर्विधनियामकानां तथात्वं यथासंभवं क्रियारूपत्वात्तज्जनकत्वाच्च स्पष्टमेव । साधनफलयोश्च कर्मप्रधानकत्वात्तथात्वम् । अग्रे च साधनस्यापि तथात्वादेव क्रियारूपत्वं प्रमाणस्यापि उत्पत्तिक्रियान्तःपातित्वात् तथात्वम् । उत्पत्यादिक्रियान्तःपातित्वादेव च प्रतिष्ठितफलरूपयोरपीति तथा । भगवच्छक्तित्वं तु भगवदाधारकत्वात्स्फुटं अग्रिमविशेषणं व्याकुर्वन्ति । ज्ञानशक्तिमित्यादि । ज्ञानजनिकां भगवच्छक्तिं सत्यत्वेन निरूपयतीत्यर्थः ननूत्र ऋत सत्ययोर्द्वयोर्निरूपणस्य किं प्रयोजनमित्यतस्तदुपपादयन्ति । ज्ञानशक्तिरित्यादि । प्रमाणं वेद इति । तस्यानपेक्षतया प्रमाण्यस्य तत्रैव पर्यवसानात्तथा प्रमेयं भगवद्धर्मा इति । ये चैव भगवता प्रोक्ता इत्यादि वाक्यैः प्रमितत्वात् । ऋतसूनृतावाणीति । सूनृता सत्यप्रतिपादिका ऋतं च सूनृतावाणी कविभिः परिकीर्तितेति भगवद्वाक्यात् । अत्र तन्निरूपणप्रयोजनमाहुः । वेद इत्यादि । उक्तमिति । द्वयमुक्तम् । सत्यं एवेति सत्ये पूर्वोक्ते पञ्चदशविधे एव । सत्यात्मकपदं प्रकारान्तरेण व्याकुर्वन्ति । कं फलं वेत्यादि । अत्र आत्माचकं च आत्मकं सत्यं आत्मकं यस्येत्येवं विग्रहो बोध्यः एवं व्याख्यानस्य प्रयोजनमाहुः । सच्चिदित्यादि । तयोक्तमिति । तथाचाख्यातमित्यर्थः । अंशतः षोडशविधत्वं यत्पूर्वं प्रतिज्ञातं तन्निगमयन्ति । टिप्पण्याम् । प्रमाणादीत्यादिषोडशधेत्यन्तम् । अत्र च सत्यस्योपपत्त्युत्पत्तिभ्यां

सर्वस्मिन् भगवदुपादेयत्वभगवत्त्वप्रमिति जनकत्वात्प्रमाणत्वं बोध्यम्। किञ्च श्रीधरीये सत्यव्रतपदस्य सत्यसङ्कल्पत्वं यद्व्याख्यातं तदत्र भगवतो व्रतादीनीत्यादिना सिद्धम्। सत्यपरपदे सत्यं परं प्रापकं यस्येति यद्व्याख्यातं तदत्र क्रियाशक्तेः त्रयोदशविधत्वेन सिद्धम्। यच्च त्रिसत्यादिविशेषणचतुष्टयपदं व्याख्यातं तदत्र सत्यस्य योनिमित्यादि विशेषणत्रयेणैव सिद्धं तेन तन्मते त्रिसत्यमित्यस्य विशेषणवैयर्थ्यं व्याख्यानव्याख्येयभावस्यागतिकत्वादतो दोषाणां विद्यमनत्वात्तदुपेक्ष्यमिति बोध्यम्॥ २५॥

एकायन इत्यत्र एवं प्रमाणेत्यादि। पूर्वश्लोके सत्यस्य प्रमाणत्वकथने सत्यात्मकमित्यनेन भगवतः[1]प्रमाणरूपतामुक्त्वाऽग्रेत्वमेकएवास्येत्यनेन श्लोकेन साधनरूपतां वदिष्यन्। तदुभयसंदष्टेनैकायनश्लोकेन भगवतो जगद्रूपतया प्रमेयतामाहेत्यर्थः। ननु ब्रह्माण्डस्य वृक्षत्वमत्र निरूप्यतेऽतः कथमत्र भगवतः प्रमेयत्वप्रतिपत्तिरित्याकाङ्क्षायामाहुः। वृक्ष इवेत्यादि। भगवान् वृक्षरूप इति। तेन आदिवृक्षोऽसौ इति मूलान्वयो बोधितः। नचात्र श्रुतौ वृक्षो दृष्टान्तत्वेन प्रविष्टोऽतो नानया भगवतः प्रमेयत्वोपष्टम्भ इति शङ्क्यम्। ऊर्ध्वमूलमर्वाक्छाखं वृक्षं यो वेदकश्चन मृत्यु न स जातु नः स श्रद्दधात् मृत्युर्मामारयादितीति श्रुत्यन्तरे मृत्युमारणाभावश्रद्धारूपफलेन तस्य वृक्षस्य भगवद्रूपतावगमादिह कार्यरूपवृक्षनिरूपणेऽपि तेन कारणवृक्षस्यानुमानान्नप्रमेयत्वहानिरित्यर्थः। ननु तथापि सद्रूपस्य तथात्वमस्तु कालात्मकस्य कथमिति चेन्न। कालस्य जगदुपादानत्वात्। गुणव्यतिकराकारो निर्विशेषो प्रतिष्ठितः। पुरुषस्तदुपादानमात्मानं लीलया सृजदिति तृतीयस्कन्धे तथा प्रमेयत्व सिद्धत्वात्। उपादेयस्योपादानात्मकत्वेन काले तथात्वसिद्धेरप्रत्यूहत्वादिति। निरूपितेति। तृतीयस्कन्धे एते देवाः कलाविष्णोरित्यादिनोक्तेत्यर्थः। दैत्यकल्पादत्र फलेऽपि विशेषमाहुः। नराणां कमित्यादिना॥ २६॥ २७॥

विभर्षीत्यत्र॥ अनेन क्षेमार्थावतारोक्त्या देवेषु पक्षपातो बोधितो ज्ञेयः॥ २८॥

त्वमित्यत्र॥ पृथिव्यादित्रयाणां चरणत्वेऽपि कथं पोतत्वमित्या-

---

१ श्रीमतां वाक्यं प्रमाणं वर्तते या आगमनार्थं प्रतिज्ञा कृता सा सत्या।

काङ्क्षायामाहुः । भूमिश्चेदित्यादि । भूमेर्जलोपरिष्ठत्वेन पोतत्वस्य प्रसिद्धत्वात्सा पोतरूपा सार्वजनीना । आकाशस्य च विष्णुपदतायाः प्रसिद्धत्वात्तत्र यदतरन् तत्तारकाणां तारकत्वमिति श्रुत्या तत्रत्ये जले आकाशेनैव तासां तरणात्तदपि पोतरूपं सार्वजनीनम् । प्रकृते च भूमौ स्थित्वा कर्मादिसाधनकरणे स्वर्गिण्योप्येतमिच्छन्तीति वाक्येन भूमेरेव प्रयोजकत्वात्पोतत्वम् । आकाशस्यापि हार्द्दस्य ध्यानप्रयोजकत्वात्पोतत्वं बोध्यम् । अक्षराऽनुपपत्तिमुद्भावयन्ति । भगवद्भावकेत्यादि । तदेतट्टिप्पण्यां विवृण्वन्ति । अक्षरेत्यादि । तेन पुरुषरूपेणेति समाधिकल्पितपुरुषरुपेण । सुबोधिन्यां समाधिकल्पितस्यापि तारकत्वे उपपत्तिमाहुः अयंत्वित्यादि । तथा च समाधिकल्पितस्यात्मदर्शनस्य मानसधर्मत्वस्य तत्वमित्यर्थः । कथमदृष्टद्वारकतानिवारणमित्यत आहुः । पादेत्यादिकरणं समाधिरेवेति । तथा च यस्य कस्यापि चरणस्य ध्यातस्यैव पोतत्वमभिप्रेतम् । ननुवास्तवस्येति । तस्यापि तथामाहात्म्यमित्यर्थः । महान् कृत इति । महत्कृतशब्दावयवस्य कृतशब्दस्य तात्पर्यमिदम् । इति प्रमाणसमाप्तिरिति । भगवद्दर्शजनकत्वेन प्रमाणपर्यवसानमित्यर्थः ॥ २९ ॥

स्वयमित्यत्र ॥ सम्पूर्णानुवाद इति । अन्यं प्रति सम्पूर्णानुवादे ॥ किमत्र प्रमेयं योगप्रमाणेन प्रमितं भवतीत्यत आहु । मोक्षेत्यादि । मोक्षः संप्रदायश्चेति । फलत्वेन साधनत्वेन चेति शेषः । तथाचैतद्द्वयमिह योगजधर्मेण प्रमितं भवतीत्यतस्तथेत्यर्थः । अलौकिकरणं च पूर्वोक्तसमाधिरूपं बोध्यम् । ननु श्लोकद्वयेऽपि संसारस्य समुद्रत्वकथनात्प्रत्युतास्मिन् दुस्तरत्वाद्युक्तेरत्र चरणस्य पोतत्वकथनमेवोचितं तदपहाय किमिति नौत्वादिकमुच्यत इत्याकाङ्क्षायामाहुः तेष्वित्यादि । सर्वप्रदर्शक इति । कूलपरिच्छन्नतया सर्वसंसारदर्शकः । एतस्यैव विवरणम् । तत्कृपयेत्यादि । एवञ्च पूर्वोक्तेन स्मार्त्तेन योगरूपेण प्रमाणेन भगवच्चरणरूपभक्तिमार्गात्मकसाधनभूतं प्रमेयम् । ततो भगवत्प्राप्त्यात्मकं फलरूपं च प्रमेयं प्रमितं भवतीत्यर्थः । चरणस्य संप्रदायपरत्वं तु पूर्वश्लोकोक्तमहत्कृतपदादेव सिद्धमिति न चोद्यावसरः । एतन्निदर्शनं च भक्तियोगेन मनसि सम्यक् प्रणिहित इति प्रथमस्कन्धोक्तव्याससमाधिसंदर्भात् ज्ञेयम । सत्सु अनुग्रहो

१ तारकासु तारकत्व धर्मविशेषः ।

यस्येति । तथार्वाचीनानामतथात्वेपि तन्मूलभूतेष्वाचार्येष्वनुग्रहात्तदनुसारिणस्तारयसीत्यर्थः ॥ ३० ॥

येऽन्य इति ॥ नन्वस्मिन् श्लोके बहिर्मुखनिन्दैव दृश्यते । नतु किञ्चित्साधनमतः कथमस्य साधनबोधकत्वमित्याकाङ्क्षायां तद्बोधकत्वप्रकारमाहुः साधनमित्यादि । तथाच तद्व्यतिरिक्ते असांप्रदायिके साधने निराकृत तत्र दृढविश्वासो भवत्यन्यथा पाक्षिकत्वं स्यादिति तदितरनिन्दाद्वारा नहि निन्दान्याय येनात्र साधनस्यैव कथनमिति भावः । विकर्मसहितमिति । ज्ञानविशेषणम् । तदेतट्टिप्पण्यां विवृण्वन्ति ॥ सम्यगित्यादिना । सुबोधिन्याम । तथाबुद्धिरिति । निरीश्वरादिबुद्धिः । महता कष्टेनेत्यादि । इदं कृच्छ्रपदस्य विवरणं असुरपक्षपातादिति । अन्यपदोक्तानां तेषां तथात्वात् । तस्मादिति विषयत्वेनात्मज्ञानादित्यर्थः । साधनत्वेन परिग्रहादिति । भावनासाधनत्वेन परिग्रहात । शृङ्खलद्वीप इत्यादि पुराणान्तरादौ प्रसिद्धं परित्यागवदिति सप्तम्यर्थैवतिः ॥ ३१ ॥

तथा न ते इत्यत्र ॥ विकर्मादिनेति । यः कश्चिद्वैष्णवो लोके मिथ्याचारोप्यनाश्रमीत्यादिवाक्येषु वैष्णवविशेषणतयोक्तेन विकर्मादिना । साधनत्वेनैवेति । त्वदीयतासाधनत्वेनैव । अतस्तुल्यत्वादिति । भगवद्भावे साधनत्वेन परिग्रहस्य तुल्यत्वात् । स्मार्त्तस्येति । मोक्षशेषभूतस्य । पूर्वं तद्वत्प्रवृत्ता इति । इदं मूलस्थ तथापदस्य विवरणम् । तथाचैवमन्वयः । ये तथा पूर्वं तद्वत्प्रवृत्तास्तेपि तावकाः सन्तः नभ्रश्यन्तीति । पाद इत्यादि इदं भ्रश्यन्त्यऽपि नेत्यस्य विवरणम् । एतस्यैव निष्कर्षमाहुः । आरुह्येत्यादि । यत्तु यथापूर्वश्लोकोक्ताः पतन्ति तथा ते तावकाः न भ्रश्यन्तीत्यन्वयं कश्चिदाशशङ्के । तथाच पातो भवति परं तथा न भवतीत्यर्थं चाह । तन्मन्दम् । ते इति पदस्य वैयर्थ्यापत्तेः । यदि हि तच्छब्दस्येदं बहुवचनं तदा तेन पूर्वश्लोकोक्ता एव परामर्षणीयाः तेषां तु पात उक्त इति नभ्रश्यन्तीति वाक्यस्यैव विरोधः । यदि च युष्मच्छब्दस्य षष्ठ्येकवचनं तदा तेनैव भगवदीयतायाः प्राप्तत्वात्तावकपदस्य वैयर्थ्यं । एवमन्यदपि तर्कितं दूषणीयमिति दिक् । तत्रत्यानामिति रात्रौ भवानां भगवति विलासचिन्हानां स्मार्त्तभक्तिमार्गे विद्यमानानां जीवानां वा दर्शनार्थमित्यर्थः । विकर्मतुल्यत्व इति । विषयासक्तिसद्भावे-

नेतरमार्गतौल्येऽपि " अपि चेत्सुदुराचार " इति वाक्यात्तथेत्यर्थः । अत्रायमाशयः । ये भक्ताः सेवां कुर्वन्तोऽपि न विषयासक्तिरहितास्तेषां विषयासक्तिनिवृत्यर्थं भगवान् स्वस्वरूपस्थितानि विलासचिह्नानि प्रदर्शयति । तदा चिह्नानामतिरमणीयत्वाद्भगवद्विलासे सर्वोत्कृष्टत्वज्ञानेन विषयेष्वतिहीनत्वबुद्धिरुत्पद्यते तदा विषयं त्यक्त्वा भगवतो आसक्ता भवन्तीत्यर्थः । नन्वेवं करणे भगवतः किं प्रयोजनमत आहुः । अत एवेति । यतस्तावकाः पूर्वमेव भगवदनुगृहीताः तावकत्वाभावे त्वयैवं किमिति क्रियेतेति भावः । एवञ्च साधने दृढविश्वासे पूर्वोक्तं फलं भवतीत्यत्र निदर्शनमनेनोक्तं ज्ञेयम् । अतो भक्तिमार्गादित्यादि । तथाचात्र स्तुत्या फलनिरूपकत्वं बोध्यम् । लौकिके प्रकारे प्रमाणादीनि चत्वार्यपि भिन्नानि । स्मार्त्ते तु निरूपणप्रकारे प्रमेयकोटावेव साधनफलयोरन्तर्भाव इति विशेषः । एतेषु चतुर्षु भगवत्स्तुतिस्तु स्फुटैव । कालस्तुतिस्तु अवतारस्तुतित्वाद्बोध्या ॥ ३२ ॥

सत्त्वं विशुद्धमित्यत्र ॥ पूर्ववदाहेति । प्रमाणप्रमेयसाधनफलभेदेन भगवत्पक्षपातमाहेत्यर्थः । प्रमाणेन पक्षपातमुपपादयन्ति वेदोहीत्यादि नस्यादित्यन्तम् । द्वेधा भिन्नेरिति । पूर्वाश्रमद्वयमेकस्यां कोटौ । उत्तराश्रमद्वयं चेत्यर्थः । श्लोकं व्याकुर्वन्ति । वैदिका इत्यादि । स्थित्यर्थमिति । वैदिकधर्मस्थित्यर्थं सिद्धमाहुः । शुद्धैरित्यादि । तथाच भगवत्सत्त्वेन चतुर्विधधर्मप्रमित्या भगवत्सेवाप्रमित्या च शुद्धैस्तथेत्यर्थः । कार्यसिद्धाविति । धर्मप्रमित्यादिसिद्धौकोपीति । वेदातिरिक्तश्चेतनो नियामकः । तथाच दृष्टविसंवादेऽपि केचिद्वेदमार्गे प्रवर्तन्ते । अन्येच न प्रवर्त्तेत इतिदर्शनात् न वेदेन कार्यसिद्धिः किन्तु श्रेयो जनकः सत्त्वोपाधिर्वैदिकपदार्थक्रियाप्रमितिजननायावश्यकइत्यर्थः । एतदाक्षिपन्ति। नन्वित्यादि । समादधते तेहीत्यादि अत्र समाधिष्टिप्पण्यां वैदिकं कर्मेत्यादिना निष्कृष्टो बोध्यः । तदभावात्तथेति वेदान्तोक्तकर्तृस्वरूपज्ञानाभावेन यथोक्तत्वाभावान्नादृष्टजननं कर्मप्रकारज्ञानाभावाच्च नभूतसंस्कारइत्यर्थः । जडत्वादिति । शरीराभिमानेन जडत्वाच्चेतनधर्मस्यादृष्टस्य तत्र नोत्पत्तिरित्यर्थः सुबोधिन्यां अपेक्ष्यते इति । तादृशां फलदानार्थमपेक्ष्यते । अस्तुवेति । यथा कथञ्चित्कर्तृस्वरूपज्ञानात्कर्मप्रकारज्ञानाच्चास्तु वा ।

अस्मिन्पद्ये मैत्रायणीयोपनिषदुक्तो गुणान्तरसारभूतः सत्वगुणो वेदे प्रमाणमिति तद्देवानां सात्विकत्वात्तत्पक्षपातार्थं भगवताऽधिष्ठीयते तदा देवानां वैदिकधर्मेषु भगवत्सेवाकरणतायास्तत्साहायतायाश्च प्रमितिर्भवतीत्युक्तम् ॥ ३३ ॥

सत्वं नचेदित्यत्र। पूर्वोक्तं पक्षपातमेकदेशेनाक्षिपन्ति। नन्वित्यादि भवतुनामेति। तदुभयोपकारकं भवतु नामसिद्धफलदातृत्वादिति सिद्धस्य परमानंदरूपस्य मोक्षाख्यफलस्य दातृत्वात्। असिद्धफलेऽपीति। न सिद्धं वृत्तिविचारगम्यरूपं फलं यस्य तादृशे तपस्यपि साक्षादेव द्वारान्तरमंतरेणैव ज्ञानाख्यफलजननसम्भवात्तथा। तत्ज्ञानइति। वेदोक्ते ज्ञाने। अत्र मूलश्लोके चेदिति नैकं पदं किन्तु चाप्यर्थे इदमवधारणे तथाचैवं जनाः इत्यवधारणे हे धातः इदं निजं सत्वं यदि न भवेत् अज्ञानभिदापमार्जनं विज्ञानञ्च न भवेदित्येवं बोध्यम्। तदेतद्व्याकुर्वन्ति इदमित्यादिना। चेदितिपदं तु तर्कत्वादर्थादध्याहृतं बोध्यम्। ननु सत्वमात्रस्यैवापेक्षाचेच्छास्त्रीयसत्वेन निर्वाहान्न ममाधिष्ठानापेक्षेत्यत आहुः। नच शास्त्रेत्यादि ज्ञानमिति। साक्षात्काररूपं ज्ञानं तद्धर्मत्वादिति शास्त्रधर्मत्वात् शास्त्रधीयत्वात्। तैरिति। शास्त्रैः विज्ञानशब्दउपासने प्रसिद्ध इति तद्व्यावर्तयितुं व्याकुर्वंति। विज्ञानमनुभव इति अयमहमित्यभेदेनानुभवः। यथायथेत्यादि। आनंदमीमांसायां प्रत्यानंदश्रोत्रियस्य चाकामहतस्येति विशेषणादितिभावः। निषिद्ध्यमानमिति नभवेदित्यनेन निषिद्ध्यमानं। उभयोरिति आत्मनः भगवतश्चेत्यर्थः। तदेतट्टिप्पण्यां व्याकुर्वन्ति। आत्मेत्यादि सुबोधिन्यां। पूर्वमिति येन्येऽरविन्दाक्षेत्यस्य व्याख्याने श्लोकयोजनां स्फुटी कुर्वन्ति। नचेत्यादि। तदेतट्टिप्पण्यां व्याकुर्वन्ति। इत्पदेत्यादि। सुबोधिन्यां ननु पदावर्त्तनापेक्षया व्याख्यानांतरस्य ज्यायस्त्वात् श्रीधरोक्तमादरणीयमित्यत आहुः। अज्ञानेत्यादि॥ तद्व्याख्यानानादरे टिप्पण्यां हेतुमाहुः। क्रियापदस्येत्यादि। स्वोक्ताशङ्केत्यादि। श्रीधरेण हि मोक्षस्य तु ज्ञानैकसाध्यत्वात् किंभक्त्येत्याशंका अवतारिकायामुपक्षिप्ता। सा तदा निवर्त्तते यदा मोक्षस्य वा भक्त्यैकसाध्यता व्याख्यायते यत्तु न व्याख्यातमितितदनिवृत्तिः। स्वव्याख्यातशास्त्रार्थो भक्तानां मोक्षप्राप्तिरूपस्तस्याप्यनेनाप्राप्तिरित्यतः श्रीधरीयं द्वितीयव्याख्यानमयुक्तमित्यर्थः। सुबोधिन्यां उत्तरार्द्धमवतारयति। नन्वि-

त्यादि स्वत इति। प्राकृतगुणतया साधन इति आविर्भावसाधने केन प्रकारान्तरेणाविर्भावइत्यपेक्षायां तं प्रकारमाहुः तत्रेत्यादि । कारण-प्रकाशमाक्षिपतीति कारणं प्रवर्त्तकः सचेदर्थः प्रकाशयुक्तो न स्यात्त-स्मिन्नर्थे इन्द्रियं न प्रेरयेत् । अतः प्रेरणादाक्षिपति । तत्र आक्षेपे एव माविर्भावोपपादेन स्वरूपसत्ववैयर्थ्ये शङ्किते तत्पार्थक्यमुपपादयितुं मूलं व्याकुर्वन्ति । गुणानामित्यादि । तथाच इन्द्रियप्रेरकाभिमानीच-तत्तदर्थप्रकाशवान् । तत्रतत्रेन्द्रियप्रेरकत्वात् यन्नैवं तन्नैवमि-त्यनुमानेनेन्द्रियप्रवर्त्तकस्य प्रकाशेऽनुमितेऽपि तेन तत्सत्तामात्रं सि-ध्यति नतु तत्स्वरूपं प्रकाशते। यदि तत्प्रकाशेत तदाऽयं भगवानय-महमित्येवं ज्ञानं स्यात् तत्तु न जायते । तत्र हेतुः सहीत्यादि । ननु स्वरूपसत्तादिनैव स्वत एवाविर्भावोस्त्विति चेत्तत्राहुः । नचेत्यादि । स्वरूपसत्वमिति स्वरूपसत्ता । प्रकृत इति पूर्वोक्तप्रकारकपरोक्षानु-भवे। पूर्वमिति । पूर्वार्द्धव्याख्याने। इदमाक्षिपन्ति । न च प्रकाशोपी-त्यादि । प्रकाशो भगवत्प्रकाशः कार्यस्य गुणप्रकाशस्य व्यतिरेकेण गुणप्रकाशमपहायेति यावत्। तथा न सम्भवति न वक्तुं शक्यते तत्र युक्तिः । अन्यथेत्यादि । तथाच यथा प्रकाशविशिष्ट एव सूर्यो वस्तु-प्रकाशरूपं कार्यं करोति न सूर्यसत्तामात्रं सर्वग्रासादौ कार्यादर्शना-त् । एवमत्र गुणप्रकाशैरपि प्रेरकाभिमानिनोः प्रकाशविशिष्टसत्तैवा-नुमेया ननु सत्तामात्रं । जीवात्मनो भगवतश्च प्रकाशः कार्यकालेऽप्य-स्ति प्रकाशत्वात् सूर्यादिप्रकाशवदितिप्रयोगात् । तथाच भगवत-आत्मनो वा प्रकाशार्थं न सत्ववपुषोपेक्षेतिपूर्वपक्षहृदयं समादधते यस्येत्यादि । तथाचैवमनुमानेपि गुणात्मकप्रकाशस्यैवानुमितिर्नतु स्वरूपस्य तत्प्रकाशकस्य चाप्रकाशादितिभावः । सिद्धमाहुः । अत इत्यादि । यतो गुणप्रकाशरूपेण कार्येण प्रकाशविशिष्टस्य सत्तैवानु-मिता भवति ननु स्वरूपस्य प्रकाशोनुभवात्मकः अतो भगवतो जी-वस्य च स्वरूपप्रकाशार्थमवश्यं भगवद्वपूरूपः सत्वगुणोपेक्षितः । तेन विना उत्तमाश्रमिणोरपि हृदि स्वरूपप्रकाशो न स्यात् तस्मादाश्र-मचतुष्टयेपि भगवत्स्वरूपात्मकस्य सत्वगुणस्यापेक्षेत्यर्थः। एवञ्चात्र जीवस्वरूपप्रकाशः शुद्धाद्वैतप्रकाशस्य वैदिके वर्त्मनि प्रमेयमित्यु-क्तम् ॥ ३४ ॥

ननामरूपे इत्यत्र । वेदे गुणाभावादिति तथा कृतवानिति सत्व-

गुणाश्रयं कृतवान्। इदमेव द्वितीयस्कन्धे सवाच्यवाचकतयेति श्लोके यतो वस्तुतः अकर्मकः सर्वकर्मरहितः सर्वेषां नियामकश्च एतादृशोऽपि सर्वानुत्पादयितुं त्रिगुणात्मकं अव्यक्तं च रूपं करोतीति विवृतम्। अनिरूपणे हेतुः साक्षीत्यादि। कर्माध्यक्ष इति कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च इतिश्रुतेः आनंदरूपेण प्रकटस्य च जन्मानीति एतदेव ब्रह्मांडपुराणेऽप्युक्तं। स्त्रीपुंमलानुषङ्गात्मादेहो नास्य विजायते किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुं प्रकाशयति सैवेयं जनिर्विष्णोर्नचापरेति। एवमेव यज्ञो वै विष्णुरिति श्रुतेः कर्माण्यपि ज्ञातव्यानि। ब्रह्मसूत्रभाष्येऽपि। ज्ञापनार्थं प्रमाणानि सन्निकर्षादिमार्गतः सर्वथा विषये वाच्येऽव्यवहार्ये कुतः प्रमेत्याशङ्क्य ईक्षत्यधिकरणे चतुः सूत्रे इदमेव प्रतिपादितम्। स आत्मान स्वयमकुरुतेत्यादिश्रुत्या चेति बोध्यं शास्त्रयोनित्वव्याख्यानेऽपि मतान्तरवजन्मादीनां न विकारत्वं किन्त्वाविर्भावतिरोभावावेव तथोत्तरात्र वक्ष्यते तदन्यनत्वाधिकरणइत्युक्तं। तस्मिनधिकरणे च चत्वाच्चावरस्येति सूत्रे प्रपञ्चस्य सत्वात्रैकालिकत्वाद्ब्रह्मत्वम्। सदेव सौम्येदमग्रआसीत्। यदिदं किञ्च तत्सत्यमित्याचक्षत इतिश्रुतेरित्युक्तं। अत्र प्रपञ्चस्यापि यत्राविर्भावतिरोभावौ तत्र पुरुषोत्तमनामरूपयोस्तथात्वे किंवक्तव्यमिति सिद्ध्यति। इमामिति श्रुतार्थापत्तिरूपाम्॥३५॥३६॥

दिष्ट्याहरेस्या इत्यत्र। भगवतः प्रमाणत्वं कथमित्याकांक्षायामाहुः। भगवदित्यादि। भिद्यते हृदयग्रंथिरितिश्रुतौ भगवद्दर्शने सर्वसंशयनिवृत्तेरपि फलत्वेनोक्तत्वाद्भगवत्साक्षात्कारः प्रमाणं श्रुतौ तस्मिन् दृढ इत्युक्तत्वेन साक्षात्कृते भगवत्येवोक्तफलस्य पर्यवसानात्। जीवन्नेव प्राणन्नेव प्राणो भवतीति वदाचरणभञ्जनेन प्रमाणकार्यं कुर्वन् साक्षात्कृतो भगवानेव वा प्रमाणमित्यर्थः। अत्र द्वितीयपक्षस्य मुख्यत्वेऽपि द्रक्षाम इति कथनेन भगवत इदानीमगोचरत्वाद्द्वितीयपक्षे जन्मना सूच्यते मूलेन पदकशब्द इव सूत्रं प्रकृतितावित्यनेन कृतप्रत्यये सिद्धः।त्रयमर्थं बोधयन्ति द्विधा पूर्वमाहुः। भूमिः पदमित्यादि। पदं छायामित्यादि च। देवपादाः भूमिं न स्पृशन्ति छायां च न जनयन्ति। तदत्र देवदेवपदे जातमिति विस्मयादभिनन्दनम्। तृतीयमाहुः। पुरुषपदमित्यादि। त्रिलोकीकल्पनायां भूः पुरुषस्य पदम्। अ-

१ शक्तिविरुद्धाचरणनिवर्तनेन।

वान्तरकल्पेषु ब्रह्मणा त्रिलोकिनिर्मियत इति ब्रह्मजन्या भूः । किञ्च आपो वा इदमग्रे सलिलमासीत्तस्मिन् प्रजापतिर्वायुभूत्वा चरत्त्वां वराहो भूत्वाऽहरत्त्वाविश्वकर्म्मा भूत्वाऽव्यनिर्मितवान् पृथनात् पृथिव्या पृथ्वित्वमिति श्रुत्युक्ते पक्षेप्युधृता । उभयथापि ब्रह्मणो दुहिता । अतस्तथेत्यतो भाग्याभिनन्दनमित्यर्थः ॥ ३७ ॥

न ते भवस्येत्यत्र आविर्भावं समर्थयतीति दर्शनप्रामाण्यार्थं समर्थयति । मूले बतशब्दो हर्षवाचकः । कारणमिति प्रयोजकम् । न तर्कयामह इति । जीवे अन्यत्र तर्कयामहे । तथाच लीलैवाविर्भावप्रयोजिकेत्यर्थः । विनोदशब्दस्यार्थान्तरमाहुः । विनावीत्यादि । विशब्दो विशेषशब्दस्यैकदेशः सत्यासत्यभामेति वद्विशेषं बोधयति । विशेषश्च देहः । पञ्चमस्कन्धे येषां समूहे न कृतो विशेष इति जडवाक्यात् । स च स्नेह विकारविचारे संसारत्वेन पर्यवस्यति । भावविकारशून्यस्य प्रपञ्चस्य ब्रह्मात्मकत्वात् । संसारस्य नौत्वं च "नृदेहमाद्यं सुलभं सुदुर्लभम्" इत्येकादशस्कन्धीयभगवद्वाक्योक्तन्यायाद्बोध्यम् । एतेनैव तन्नोदनस्याविर्भावप्रयोजकता व्याख्याता तदेतदाहुः । अन्यथेत्यादि । तदा च यदि भगवान् भक्तानां पतिपुत्राद्याभिमानिकसम्बन्धिरूपेण नाविर्भवेत्तदा संसारनौः पारं न प्राप्नुयादित्यर्थः । अस्मिन् पक्षे आरम्भगतस्य न शब्दस्यान्वयो न भवतीति तदर्थं योजनान्तरमाहुः । अस्मिन्नर्थ इत्यादि । अस्मिन्नेवार्थे पक्षान्तरमाहुः यद्वेत्यादिविशब्दस्य वियोगरूपमर्थान्तरमभिप्रेत्यार्थान्तरमाहुः । नौकेत्यादि । सर्वप्रेरणमिति सर्वेषामवतारकालीनानां कामभयादिभिः स्वसम्बन्धकरणम् । नन्वेतेषु पक्षेषु कश्चिदेको निष्कृष्य वक्तव्यः किम्बहुभिरित्याकाङ्क्षायामाहुः । यद्यपीत्यादि । तथाचाप्ताभावात्कल्पनया बहवस्तर्क्यन्त इत्यर्थः । ननु तर्हि लीलापक्षएवाद्रियतां किमन्यैरित्यत आहुः । वस्तुत इत्यादि । स वै नैव रेम इति श्रुतौ लीलायाः स्वबहुभवन एव कारणताया उक्तत्वेन मूलरूपजन्मकारणताया अनुक्तत्वेन च तत्रेयमपि गोचरी भवतीत्यस्य निर्णेतुमशक्यत्वात्सन्देह एवेत्यर्थः । उत्तरार्द्धव्याख्याने जगतीति । विषये सप्तमी । अनादित्वमिति । न कदाचिदनीशं जगदिति श्रुत्या यथेदानीं तथा चाग्रे पश्चादप्येतदीदृश इति स्मृत्या च बोधितमनादित्वम् । अलीकत्वमिति । नित्यस्य मूलकारणस्याभावादलीकत्वम् ।

आकस्मिक इति। अहेतुजन्यः। तथाच यदृच्छापक्षापत्या श्रुतिविरोधः। अत इति। उक्तदूषणनिरासार्थत्वात्। जीवतदुत्पत्त्यादिः। मूलकारणाधारा साधिष्ठाना स्वरूपवती उत्पत्त्यादिहेतुत्वात्। स्वस्वमतप्रतिपन्नप्रथमकार्यवदित्यनुमानेन सिद्धे सत्ये तादृशे कारणे जीवाद्युत्पत्तिर्भवेत्। एवं युक्त्या भगवत अभवत्वं व्युत्पाद्य पद्ये फलितमाहुः। एवमित्यादि। पूर्वोक्तरीत्या भगवत्सत्तायाः साधनेन स वै नैव रेम इति श्रुत्यनुस्मृतो लीलया प्रादुर्भावः समर्थितः। पूर्वोद्धोक्तरीत्या प्रादुर्भावप्रयोजकाज्ञानं वा समर्थितम्। तत्र युक्तिमाहुः। अन्यथेत्यादि। भगवत अनादित्वेऽनाश्रयत्वेनात्मरूपत्वे च सर्वमेव जगन्न स्यात्। नित्यस्य कारणस्य वक्तुमशक्यत्वादित्यर्थः॥ ३८॥

मत्स्याश्वेत्यत्र॥ अश्वोपि जलज इति। अप्सु योनिर्वा अश्व इति श्रुतेः हयग्रीवोपि जलज इति। इदं कल्पान्तराभिप्रायम्। द्वितीयस्कन्धे ब्रह्मसूत्रे, हयग्रीवप्रादुर्भावेऽस्योक्तत्वात्। अथवा पञ्चमस्कन्धे वेदानि युगान्ते तपसा तिरस्कृतान् रसातलाद्यो नृतुरङ्गविग्रहः। प्रत्याददे वै कवयेऽभियाचत इत्यत्र युगान्तरे रसातलाद्वेदानयने जलएवाविर्भूय स्थिते तथेत्यर्थः। अक्षजोपीत्यादि। अक्षं मनोरूपमिन्द्रियं तस्मात्प्रकटः हंसः। स ब्रह्मणा ध्याने क्रियमाणे प्रकटः ध्यानञ्च मानसम्। तथाच तदुदित इति न्यायेन तस्याक्षजत्वमुच्यते। समानस्मिन आत्माजनानामितिश्रुतेश्च। बहिर्वायुर्यत्रासौ बहिर्वायुराकाशस्तदेव स्थानमुपवने यस्य स तथा। तथाच योऽवत्यरण्ये प्रवेशयति तस्मारण्यत्वमुचितमिति भावः। एवं व्याख्यानं जलवासित्वेन जलप्रकृतिकत्ववारणायेति बोध्यम्। तरतमभावादिति मत्स्यादिषूत्तरोत्तरं तथात्वात्। वास्तव्यत्वादिति। सर्वदा जलवासित्वात्। इदं च तैत्तिरीयब्राह्मणे प्रजापतिकूर्मयोः सम्वादे ममैवत्वं पूर्वः समभूरिति प्रजापतिना प्रोक्तः कूर्मः पूर्वमेवाह हास्मीत्युक्त्वा सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादितिश्रावणात्स्फुटम्॥ ३९॥

दिष्ट्येत्यत्र॥ तच्चरित्रं फलरूपमिति दिष्ट्या हरेस्यादित्यत्र भगवच्छास्त्रे भगवानेव प्रमाणादिचतुष्टयमिति प्रतिज्ञाय यदत्र चरित्रस्य फलत्वमुक्तं तत् धर्मरूपेण प्रकटस्य आविर्भावः। कर्माणि आनन्दरू-

---

१ उत्पत्तिमत्वात्, स्थितिमत्वात् तिरोभाववत्त्वात्।

पेण प्रकटस्य आविर्भावो जन्मानीति वैदिकसिद्धान्तस्य भगवच्छास्त्रसिद्धान्तस्य सामानाधिकरण्यादिति बोध्यम् ॥ ४० ॥

इतीत्यत्र । मूले अनिदं यथेत्येकं पदं समासस्तु इदञ्च तद्यथाच इदं यथा अनिदं यथेत्येवं तत्र बोध्यः । एकत्रिंशति स्वर्ग इति च नृसिंहपुराणे सिद्धाः । एवं स्वतः स्वर्गपक्षोऽपि पुराणान्तरादवगन्तव्यः ॥ ४१ ॥

इतिश्रीमद्वल्लभचरणैकतानश्रीयदुपतितनुजपीताम्बरविरचिते
दशमस्कन्धसुबोधिनीटिप्पण्योः प्रकाशे
द्वितीयाध्यायविवरणम् ॥



# अथ तृतीयोऽध्यायः ।



तृतीयाध्यायं व्याख्यातुं सङ्गतिमवसररूपां सूचयन्तोर्थविशेषमाहुः । जननमित्यादि अत्र षड्विधो भगवानित्युक्त्वा दिष्ट्या हरेस्या इत्यत्र धर्मरूपेणाविर्भावः कर्माणि आनन्दरूपेणाविर्भावो जन्मानीति यः श्रौतसिद्धान्तउक्तः सस्स्मारितो ज्ञेयः । अत्र षडार्थानां निरूप्यत्वेऽध्यायार्थाननुगम इत्यत आहुः । रूपान्तरेत्यादि । तर्हि षट्निरूपणस्य किम्प्रयोजनमत आहुः । प्रतीयमान इत्यादि । रूपान्तरस्वीकारात्पूर्वं यः प्रतीयमानः स भगवान् षट्गुणैश्वर्यसम्पन्न इतिज्ञापयितुं रूपान्तरस्वीकारीययोगित्वेन तथोच्यते तेन रूपान्तरस्वीकरणमेवाध्यायार्थ इत्यर्थः । जननस्य सार्द्धाष्टभिर्निरूपणे हेतुमाहुः ऐश्वर्य्यमित्यादि । अर्द्धमात्रा हरौ परेति अर्द्धमात्रात्मकः कृष्णः । इति तापनीयश्रुतेः।अर्द्धचतुर्थमात्रेणोमित्येकेनैवाक्षरेण परं पुरुषमभिध्यायितेति प्रश्नश्रुतेश्च प्रणवस्य या चतुर्थ्यर्द्धमात्रा सा हरौ प्रकटे परा परत्वबोधिका अर्द्धमात्राचात्र गर्भवृद्ध्यादेस्तुल्यत्वेऽपि प्रादुर्भावप्रकारेणालोकविलक्षणेन स्वरूपेण च प्रकटीकृतेति ज्ञापनाय तथेत्यर्थः। टिप्पण्यां ननु जनने वर्णनीये कालगुणवर्णनस्य किम्प्रयोजनमित्याकाङ्क्षायां अधिकारिणीत्यर्द्धं विवृण्वन्ति । दक्षिणेत्यादि । नन्वाधिदैविककालप्रादुर्भावे किमानमित्यत आहुः । अतएवेत्यादि । तथोक्तमिति सर्वगुणोपेतत्वमुक्तं । ननु प्रक्षालनपङ्कन्यायेन दक्षिणायनं विहायोत्तरायणएव तद्भगवता कुतो नकृतमित्यत आहुः । यद्यपीत्यादि । अत्रापिगमकमाहुः । अतएवेत्यादि । ननु भवत्वेवं तथापि भगवदात्मत्वे किंगमकमत आहुः । असङ्कोचेत्यादि । सर्वशब्देनेति सर्वगुणोपेतशब्दैकदेशेन तेन सुबोधिन्यां मूले कालस्य सर्वगुणोपेतत्वादिकथनेन सर्वथा भगवत्तुल्यत्वमायातीति तद्वारणायाहुः । खंडश इत्यादि । भगवद्गुणैकदेशतस्ते गुणा अवयवशः कालावयवैः कृत्वा सर्वेषां गृहरक्षेतारादीनां यत्फलं तस्य बोधका उद्बोधकाः । तथाच तावन्मात्रकार्यकर्तृत्वात्कालस्य न सर्वथा भगवत्तुल्यत्वमित्यर्थः । गुणप्राकट्यं देशादिष्वतिदिशन्ति । मूलइत्यादिसार्द्धद्वयेन । देशोपि त्रिविध इति उपर्यधः परित इति भूर्भुवस्वरिति वाचैवेति चकारः सर्वगुणप्राकट्य-

बोधकः। एवकारस्तस्याध्याधिदैविकत्वज्ञापकः एवं भूतान्यपि ज्ञेयानि। तत्रत्या ये विदुरिति त्रिविधदेशोद्भवेषु ये भगवत्प्राकट्यं विदुरित्यर्थः। ज्ञापनार्थमिति अवतरतो मूलरूपत्वज्ञापनार्थमित्यर्थः। कारिकोक्तमर्थं विषदीकर्त्तुमाहुः। एवमित्यादि भयवर्णनमित्यन्तं। तत्र स्वीकरणमुच्यत इत्यन्तेन सङ्गतिबोधनायाध्यायार्थउक्तः। अतो वर्णनतात्पर्यमाहुः। अत इत्यादि। ततो जननस्वरूपबोधनार्थं सर्वगुणप्राकट्यतात्पर्यमाहुः। तस्येत्यादि। ततः स्तोत्रयोस्तात्पर्यमाहुः। जनकयोरित्यादि। तादृशमेव जनितमिति तयोर्बुद्धिः स्यादिति। पूर्वोक्तरूपमेव तयोरुत्पन्नमिति सर्वेषां बुद्धिः स्यात्। ततः स्वान्तरगतस्वरूपकथनस्य तदाहुः। रूपस्येत्यादि। गमनस्य च स्फुटं। ननु रूपेणैव सकलकार्यसिद्धेः किंरूपान्तरग्रहणेनेत्यत आहुः। रूपान्तरेत्यादि। तत्वात्मत्वेन ज्ञानाभावादपि सर्वमुक्त्यभावसिद्धिरिति नेदं रूपान्तरग्रहणप्रयोजनमित्यतो हेत्वन्तरमाहुः। लीलाया इत्यादि। तर्हि भयवर्णनं कुत्रोपयुज्यत इत्यत आहुः।अलौकिकमित्यादि। अलौकिकं महात्म्यज्ञानं लोकात् स्नेहात् बालरूपात् कंसाद्धेत्यर्थः। तद्बुध्यनुवादोयं।अथ मूलं व्याकुर्वन्ति।प्रथममित्यादि। प्रादुर्भूतइति। प्रादुरासीदित्यस्यार्थोयं। एवमेवजातपदमपि बोध्यम्। यद्यपि दुरान्वय एवं भवति तथाप्यध्याहारापेक्षया लघीयस्त्वादेवमुच्यते ॥१॥

दिशः प्रसेदुरित्यत्र देवताप्रसाद इति।कर्णौ दिश इत्यादि वाक्याद्दिशः श्रोत्रेन्द्रियदेवताः ताः प्रसन्ना सर्वमेव भगवन्सम्बन्धिश्रोष्यंतीति तत्प्रसादः सर्वसाधक इत्यर्थः। तद्विवृण्वन्ति। अत इत्यादि। निर्मलेत्यत्र। निर्मला उडुगणा उदये यत्रेति गडादिसमासोत्र बोध्यः। समासान्तरमपि बोधयन्ति।उदयो दर्शनमिति अस्मिन्पक्षे निर्मलाना मुडुगणानामुदयो यत्रेति समासः। महीत्यत्र। विवाहेति। सर्वत्तवो विवाहस्येत्यापस्तम्बस्मृतेस्तथेत्यर्थः॥ २ ॥

नद्यइत्यत्र॥ एकोनविंशतिभेदा इति। यद्यपि तैत्तरीयसंहितायां कूपाभ्यः स्वाहेत्यादिना सर्वाभ्यः स्वाहेत्यन्तेन विंशतिभेदाअपामुक्तास्तथापि सर्वाभ्य इत्यन्तिमस्य पूर्वोक्तसर्वग्राहकत्वेनातिरिक्तत्वाभावमभिप्रेत्यैकोनविंशति भेदा इति बोध्यम्। कालनियन्तुः इति। सङ्कर्षणस्य तथाच भगवद्रशोः यः कालनियन्ता तस्मादित्यर्थः॥३॥४॥

मनांसीत्यत्र। भौतिकगुणसमय इति। तामसाहङ्कारकार्यगुण-

समये मनः पदमिन्द्रियाणामप्युपलक्षणम् ॥ ५ ॥ ६ ॥

मुमुक्षुरित्यत्र । मुनीनां देवानां भगवत्प्राकट्यज्ञाने हेतुमाहुः शब्दबला इत्यादि।शब्दस्य श्रुतेरर्थस्य भगवतश्च बलं येषां तेन तथा अतो ज्ञानात्तथाकृतवन्त इत्यर्थः ॥ ७ ॥

निशीथइत्यत्र । रात्रेस्तन्मूहूर्त्तस्यचेति निशीथशब्दस्यार्द्धरात्रवाचकत्वात्तेनैवार्थबलात् रात्रेरपि प्राप्तेस्तथेत्यर्थः । सिंहार्के निशीथ इदानींषट्चत्वारिंशत्सप्तचत्वारिंशद्घटिकाद्वयात्मको भवतीति तद्यावृत्त्यर्थं विवक्षितं प्रादुर्भावसमयं निश्चेतुमाहुः । पञ्चचत्वारिंशत्तत्रैवमुक्तं तत्रायमर्थः द्वापरस्य पञ्चविंशाधिकशरच्छतावशेषे भगवत्प्रादुर्भाव इत्येकादशस्कन्धीयात् शरच्छतं व्यतीयाय पञ्चविंशाधिकं विभो इति ब्रह्मवाक्यान्निश्चीयते । तत्र च गणितविचारे स्फुटोऽर्कः ४ । १९० । १ गतिः ५८ । ८ । अयनांशाः । २४ । ३२ । २० मधुपुर्यां पलप्रभावः । ६ । ५ । चरखण्डानि ६० । ४८ । २० चरपलानि ३२ दिनमानं ३१ । ४ रात्रिमानं २८ । ५६ रात्रार्द्धं १४ निशीथः ४५ । ३२ एवं सति तत्राऽषाढोधिकोभ्युपेयः उक्तरीत्या स्पष्टेऽर्के पिसति ४ । १९ ० । १ एतादृशस्य सूर्यस्य तदैव सिद्धेरिति । अतएतावत् भवति । षट्चत्वारिंशत् घटिकामिति । ईदृशस्तु निशीथो विषुवद्दिने एकस्मिन् भवति पञ्चमस्कन्धीयात् । यदा मेषतुलयो वर्त्तते तदाऽहोरात्राणि समानि भवन्तीतिवाक्यात् ज्योतिशास्त्राच्च निश्चीयते । तदग्रे तु प्रत्यहं पलद्वयं रात्रेर्दिनस्य च वृद्धिह्रासौ एवं सति यत्तत्राष्टम्याः प्रान्तभागज्ञाते । तत्र चन्द्रप्रकाशस्तेभ्यो द्वात्रिंशत्पलेभ्यः पूर्वं भवति चन्द्रप्रकाशात् क्षितिजसंयोगे तमसो निवृत्तेः । तदेवाभिप्रेत्य मूले तमउद्भूतइत्युक्तम् ।भगवत्प्राकट्यं तु तावत्पलोत्तरं निशीथारम्भसमये चन्द्रोदयसमकाले तदेवाग्रिमश्लोके प्राच्यां दिशीन्दुरिवेति दृष्टान्तेन सूचयिष्यते । अतो द्वात्रिंशत्पलान्यनादृत्य यत्पञ्चचत्वारिंशेत्यादिकथनं तत्प्रकाशन्यायेन दोषनिवृत्तिबोधनार्थमिति न कोपि विरोधः। ननु जायमानेऽजन इत्यनेनैव गुणानिरूपणासिद्धिरितिजायमाने जनार्दन इत्यस्य किम्प्रयोजनमित्याकाङ्क्षायामाहुः भगवज्जननस्येत्यारभ्य हेतुरुक्तइत्यन्तम् । तथाच कालः पूर्वमुपक्रान्तः सर्वत्र च हेतुत्वेन प्रसिद्ध इति प्रकृतेऽपि स एव निमित्तत्वेन सम्भाव्यते इति तद्व्यु-

दासाय जायमानेऽजनइत्युक्तम् । प्रादुर्भावस्य निमितत्वाय च जायमाने जनार्द्दन इत्युक्तमिति भावः । ननु नेदं युक्तम् । देवक्यामिति पद्येनैव चारितार्थ्यादित्याशङ्कायामस्याप्याशय सूक्ष्मेक्षिकया आहुः । एवं संदर्भे इत्यादि । अयमपीत्यपि शब्दः प्रासङ्गिकत्वं सूचयति । पुरुषोत्तमस्यैव प्रकरणित्वात् । तत्स्पष्टी कुर्वन्ति । सर्वेत्यादि । तत्र जायमानेऽजनइत्यस्य गुणाविर्भावोक्तिमध्ये निरूपणाद्धर्मरक्षकता स्पष्टेति तेनानिरुद्धावतारो जायमाने जनार्द्दन इत्यविद्यारूपाज्ञाननिवर्त्तकत्वेन सङ्कर्षणावतारो देवक्यामित्यनेन च प्रद्युम्नः पित्रोः सुखदानात् । विष्णुरूपिण्यामिति वक्ष्यमाणाच्च । यः पुनर्बभूव प्राकृतः शिशुरित्यनेन उक्तः स तु वासुदेव नन्दगृहे प्रादुर्भावात् पूर्वमत्र जात इति प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज इति गर्गवाक्यादवसीयते । अतो हेतोः सर्वरूपेणाप्याविर्भूतो भगवानिति एतत् तृतीयाध्यायरूपे संदर्भउक्तमित्यर्थः । ननु तादृशगुणाधारादौ कालस्य निमित्तत्वाङ्गीकृते को वा दोष इत्यपेक्षायामाहुः निमित्तत्वमित्यादि । एकमिति । कालात्मकं निरूपितमिति । वारद्वयं जायमानेत्यादिकथनेन निरूपितमित्यर्थः । नचास्त्वेवं तथापि सकृदुच्चारितैरजनादिपदैः कथमर्थद्वयबोध इति शङ्क्यम् । सकृदुच्चारितादप्यजनादिशब्दादर्थमर्यादया छिद्रेतरत्ववदवतारत्रयबोधस्यापि सुखेन सम्भवात् । ननु पूर्वाध्याये पुरुषोत्तमप्रादुर्भावस्य नन्दगृहे समार्थितत्वादत्र नन्दगृहे वासुदेवपदस्य व्यूहसाधारणस्य कथने किम्प्रयोजनमिति चेत् उच्यते वासुदेवस्य व्यूहस्य नान्तरीयकत्वज्ञापनायेति जानीहि । वक्ष्यन्ति च पञ्चमाध्याये । वासुदेवोत्रैवाविर्भूत इति । सिद्धान्ते इति । द्वितीयस्कन्धविमर्शाध्याये भूमेः सुरेतरेत्यस्य व्याख्याने चोक्तम् । एकमेव चरित्रं मोक्षभक्तीनिरूपयतीति । तेन पुरुषोत्तमवासुदेवयोराधिदैविकाध्यात्मिकवत्तत्तत्कार्यकरणादेव व्यपदेशभेद इत्यभिप्रेत्यैव शुद्धसत्वे आविर्भूतः पुरुषोत्तम एव वासुदेव इति । वसति जगदस्मिन्निति वासुदेवः क्रीडावान् सचासौ देवश्च । सर्वतः पाणिपादान्तमिति वाक्योक्तधर्मवानिति च द्वेधापि साम्प्रदायिकानां व्याख्यानं सङ्गच्छते । देवक्यामित्यत्र ननु नन्दगृहे वासुदेवश्चेतर्ह्यत्र नेति वक्तव्यं तथा सति कथं सर्वांशेन प्रादुर्भाव इत्याकाङ्क्षायामाहुः । सम्पूर्ण इत्यादि । तथाच निबन्धे प्रथमे वासुदेवोऽभूदितिक-

थनात्तद्द्वाराऽत्रापि तदागमनेन वासुदेवाविर्भावादस्ति सर्वांशेनाविर्भाव इत्यर्थः। नन्वत्र वासुदेवाविर्भावस्य किम्प्रयोजनमत आहुः। न केवलमित्यादि। इदमिति। वासुदेवाख्यम्। तथाच पुरुषोत्तमस्याक्षरएवाविर्भावो नतु गुणसंसर्ग इति तदभावार्थमात्रोऽपि वासुदेवाविर्भावाङ्गीकरणमित्यर्थः। सत्वगुणाभिमानिव्युदासायाहुः। विष्णुव्यापक इत्यादि। सर्वान्तर इति। अनेन स्वतोऽनाविर्भावे उपपत्तिरुक्ता। सर्वान्तर्यामिव्युदासश्च कृतः। स्वत आविर्भावे स्वभावहानिप्रसङ्गात्। अन्तर्यामिप्रतिशरीरं भिन्नत्वाच्चेति। दृष्टान्तासिद्धमर्थं व्याकुर्वन्ति। सर्वेत्यादि। तथाच प्राचीदृष्टान्तेन श्रीदेवक्या आविर्भावप्रयोजकत्वमात्रं नतु मातृवज्जननीत्वं द्योतितम्। इन्दुपदेन च परमैश्वर्ययोगात्पूर्णत्वं द्योतितम्। तर्हि दृष्टान्ते कथं तत्सिद्धिरित्यत आहुः स इत्यादि। स इन्दु प्राच्यां दिशि प्रथमं पूर्णमास्यां षोडशकलात्वदशायां पूर्वं पूर्ण एव दृश्यते। चन्द्रमसः खण्डास्तु तिथ्यन्तरे आकाशमध्ये तत्प्रान्ते च दृश्यन्ते। तथाच प्राचीपदेन्दुपदयोः समभिव्याहारात्। दृष्टान्तेऽपि तत्सिद्धिरित्यर्थः। नन्वेवं दृष्टान्तेनैव पूर्णत्वसिद्धौ पुष्कलपदस्य किम्प्रयोजनमित्याकाङ्क्षायामाहुः। उच्चैरित्यादि। तथाच कृष्णद्वितीयादौ उच्चैः खण्डस्यापि प्राच्यां दर्शनात्तद्व्यावृत्यर्थं पुष्कलपदमिति तत्समभिव्याहृतदृष्टान्तादेव पूर्णत्वसिद्धिरित्यर्थः। अत्र दृष्टान्तबोधकयोयथेव पदयोः सत्वात्। पुष्कलपदस्यार्थान्तरमभिप्रेत्येतत् द्विधा व्याकुर्वन्ति। पुष्कलशब्देनेत्यादि च। अत्रेति। एवं व्याख्याने। एवं सतीति। दृष्टान्तद्वयेऽङ्गीकृते सति इति तथेत्यर्थ इति। एवं बोधनार्थं दृष्टान्तद्वयमुक्तमित्यर्थः सिद्धमाहुः। अत इत्यादि। एतमर्थमुपपत्त्या दृढी कुर्वन्ति। अत एवेत्यादि प्रादुर्भावे आपतितं श्रुतिविरोधं कारिकया परिहरन्ति। दासीनामित्यादि। अर्थस्तु दास्यो वक्ष्यमाणा अङ्गीकार्याः तासां सर्वपुरुषार्थरक्षानिमित्तां तादृशं स्वसमानाकारं वासुदेवमत्युत्कटं भक्तदुःखं वा। निमित्तीकृत्य स्वाविर्भावे प्रयोजकं कृत्वा मम स्वामीपुरुषोत्तमः प्रादुर्भूत इति। शेषं तु टिप्पण्यां व्याख्यातं वाचीत्यादिना। अयं टिप्पण्योक्तोऽर्थः। साधनाध्यायाद्वितीयपादे अरूपवदधिकरणस्याद्वितीये। प्रकाशवच्चावैयर्थ्यादिति सूत्रे स्फुटः। तर्हि यथा सौरः प्रकाश व्यवहार्यः। अव्यवहार्य्यश्च न हि स्वतः सम्पादयितुं शक्यते स्थापयितुं

वा । आगते तु सूर्ये मेघाद्यभावे च सान्निध्यमात्रेण व्यवहारः कर्त्तुं शक्यते तथा लौकिकवाङ्मनोभिर्नशक्यते व्यहर्त्तुं ईश्वरसन्निधाने तु शक्यते इति द्वयमाह श्रुतिः । कुत एतदवगम्यते । तत्राह । अवैयर्थ्यात् अन्यथा शास्त्रं व्यर्थं स्यादित्येवं प्रतिपादनात् ॥ ८ ॥

तमद्भुतमित्यत्र । वीर्यनिरूपणार्थमिति । सामर्थ्यनिरूपणार्थम् । ऐश्वर्यस्याष्टविधत्वात्तत्राष्टौ श्लोका युक्ताः निरूपणीये वीर्ये कुतो द्वौ श्लोकौ कुतश्च प्रथमे श्लोके दशपदानि द्वितीयश्लोके च द्वेभगवततोविशेषणीभूते इति शेषं तेन पञ्चपदस्यत्वेऽपि न दोषः इत्याकाङ्क्षायां सार्द्ध चतुष्टयकारिकाभिस्तत्तात्पर्यं वदन्तीत्याशयेन टिप्पण्यां तद्व्याकुर्वन्ति । विशेषणेत्यादि अयमिति । प्रथमचरणोक्तः । हेतुरिति । उक्तदानादौ हेतुभूतम् । द्वितीयमिति शेषः । समुदिततत्तात्पर्यमिति । समुदितं यच्छ्लोकद्वयं तत्तात्पर्यमित्यर्थः । अग्रे इति । अग्रिमकारिकासु सर्वेषामिति पदं संकुचितवृत्तिकमित्याशयेनाहुः । भक्तानामित्यादि । अग्रे तु स्फुटत्वान्न व्याख्यातम् । परं तत्रार्द्धाभ्यां द्विधाद्वादशविधत्वमुच्यन्ते इति बोध्यम् । सर्वप्रकाशकश्चैवेत्यनेन पुनरन्याविधोच्यत इत्याशयेनाहुः । सर्वेत्यादि । कालात्मेत्यनेन ततोप्यन्योच्यते इत्याशयेनाहुः । लीलाया इत्यादि । इन्द्रियनायक इत्यनेन ततोप्यन्योच्यते इत्याहुः । लौकिकेत्यादि । आत्मेतिकारिकां व्याकुर्वन्ति । आत्मपदेनेत्यादि । नन्वत्र श्लोकद्वये तमित्यस्येक्षतिक्रियाकर्मत्वेन मुख्यतयाऽन्वयदर्शनात् द्वादशानामपि विशेषणत्वाङ्गीकारो न युक्त इतिचेन्न तमित्यस्यात्रैवं विशेष्यत्वेऽपि पूर्वश्लोके यः प्रादुरासीत्यनेनोक्तस्तत्परामर्शितयेतराव्यावर्त्तकत्वेन विशेषणत्वानपायात् । एवं चापेक्षाभेदेन तमित्यस्योभयरूपत्वात् विशेषणानां द्वादशत्वं युक्तमेवेति जानीहि । एवं कारिकाणां तात्पर्यमुक्त्वा एवं विधा कथनस्य प्रयोजनं बीजञ्चाहुः । एतेनेति । अष्टधा द्वादशविधत्वनिरूपणेन इति फलितमिति । इति हेतोः सर्वरूपतया अत्यलौकिकभगवत्सामर्थ्यरूपं वीर्यमेव फलितम । सुबोधिन्याम् । तमित्यस्याभासे तच्चेति । द्वादशसुविशेषणेषु विवृत्तौ । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर इति गीतायां श्लोकद्वये सर्वान्तराविश्य सर्वाधारकत्वेन क्षराक्षरातीतत्वेन च यं उच्यते सोऽत्र तच्छब्देन परामृष्ट इत्याशयेनाहुः । तमि-

त्यादि। यादृशस्तच्छब्देन परा मृष्टस्तस्य सामान्यतः स्वरूपमेतेनोक्तम्। पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया यस्यांतस्थानि भूतानि येन सर्वमिदं ततमिति लक्षणान्तरसंग्रहायाहुः। आश्रयेत्यादि। तथात्र गीतोक्तलक्षणत्रयवानत्र परामृश्यत इति बोधितम्। एतेन सर्वनियामकत्वादिरूपमैश्वर्यं चोक्तम्। मतान्तरमाहुः। सृष्टिरूप इति केचिदिति। अत्र युक्त्यलिखनादुक्तवाक्यविरोधाच्च तदसङ्गतमिति बोधितम्। टिप्पण्याम्। तमद्भुतमिति पदद्वयव्याख्यानयोः परस्परं विरोधं परिहरन्ति। यद्यपीत्यादि। तथाच अन्यअन्यदेवतद्विदितादथो अविदिति तादपीति श्रुत्या विदिताविदितपरत्वस्यापि श्रावणादस्यैवार्थस्य सिद्धेर्न विरोध इत्यर्थः। सुबोधिन्यां इदमिति। लोकवेदप्रसिद्धत्वे सत्येष्वद्भुतत्वम्। एवमत्रतात्पर्यवृत्या पदद्वयं व्याख्यातम्। अतः परं योगेनाग्रिमपदं व्याकुर्वन्ति बाल इत्यादि। अद्भुतबालकपदयोः समभिव्याहारेण सूचितमर्थमाहुः। अद्भुतश्चेत्यादि। पञ्चाग्नीत्यादि। अत्र आपः पुरुष वचसो भवन्तीति श्रुतेस्तद्विद्यासाधितरूपस्याम्बुजत्वं बोध्यम्। प्राकृतैरिति। अम्बुजैरित्यर्थः। चतुर्भुजमित्यस्याभासे क्रियाशक्तिमित्यादि। ज्ञानशक्तिवदद्भुतां क्रियाजनिकां शक्तिं निरूपयन् चतुर्विधमपि ज्ञातमाह। क्रियायाः ज्ञानमूलकत्वात्तच्छक्तिनिरूपणे छिद्रेतरत्ववत्तन्मूलभूतं ज्ञानमर्थबलादाहेत्यर्थः। किं तच्चतुर्विधमित्याकाङ्क्षायां टिप्पण्यां तद्विवृण्वन्ति। प्रमाणेत्यादि। निरूपयतीति। अर्थबलान्निरूपयति। ज्ञाननिरूपणप्रयोजनमाहुः। तेनेत्यादि। चतुर्विधेत्यादेस्तात्पर्यमाहुः। चतुर्विधेत्यादि। तेषामिति भूतानि वेत्यस्य तात्पर्यमाहुः। भगवद्भुजेत्यादि। तस्यैवार्थान्तरमाहुः। जरेत्यादि। उक्तरूपाणीति। आधिदैविकरूपाणि। अत्र चतुःशब्देन नानाविधानां चतुःसंख्यकानां यः सुबोधिन्यां संग्रहस्तत्र बीजं तु जातेष्ट्यधिकरणे सिद्धं संख्यायाः प्रयोजनवत्त्वमेव ज्ञेयम्। तत्र हि वैश्वानरद्वादशकपाले अष्टादिसंख्यानां विद्यमानत्वात्ताभिस्तत्समानाक्षरछन्दः प्रभृतीणां तत्कार्याणां त्वविरोधदर्शनात्। एवमत्रापि चतुर्णां भुजानां दर्शनेनेदं सर्वं सूच्यते अन्यथा गोपालतापनीये द्विभुजमिति श्रावणादत्रापि तथैव दर्शयेदिति। दिक्कालावेति तु इन्द्रादयो बाहव आहु देवाः इति द्वितीयस्कन्धवाक्यात् स्फुटमतो न व्याख्यातम्।

द्विगुणपुरुषत्वं विवृण्वन्ति। पुरुषस्येत्यारभ्यालौकिकमित्यन्तम्। घातकाविति कारिकायोजना तु चतुर्षु भुजेषु द्वौ भुजौ घातकौ रक्षकौ विरोधेष्युक्तौ च पुनः अतिसङ्कटेऽपि तथोक्तौ किञ्च चतुर्भुजपदेन भुजतया वेदोक्तं द्विविधं ज्ञानमुक्तं तथा भगवतो भक्तिरुक्तेति रूपामङ्गीकृत्य तां विवृण्वन्ति । घातकावित्यारभ्य रूपावेत्यन्तम् । तत्रैव तद्बोध्यम् । मूले न सकृदुच्चारितेष्वेतेषु पदेषूक्ता अनेकेऽर्थाः खले कपोतिकान्यायेनापतन्तो गतस्तमोर्के इतिवद्बोधन्यवैशिष्ट्येन तं तं प्रत्येकैकशः स्फुरन्तोऽपि भगवत्कृपावलोकितं सर्वज्ञं प्रतियुगपत्क्रमेण वा यथाधिकारं विषयीभवन्तीति न कोऽपि शङ्कालेशः एवमग्रेपि बोध्यम् । अग्रिमपदे वैराग्यं कथमुच्यत इत्याकाङ्क्षायां तद्विवृण्वन्ति । वैराग्यमित्यादि । अर्थस्तु स्पष्टः उक्तरीत्येति । दक्षिणहस्तयोरुपरि शङ्खो नीचैः पद्मं वामयोरुपरिगदा नीचैश्चक्रम्। अनया रीत्या धारयन्मधुसूदनः पुराणान्तरे तथाप्रसिद्धत्वात् । मन्दारमधुसूदनादौ तथा दर्शनाच्चेति भाति। एवं माधवरूपेऽपि बिन्दुमाधवादौ तथा दर्शनात् नारायणस्वरूपेऽपि व्यङ्कटेशे तथा दर्शनाद्भाति । अत्र पूर्वं चतुर्भुजपदविवरणे चतुर्विधकार्यकारणार्थमवतारकथनेन चतुर्व्यूहत्वसिद्धावपि यदत्र त्रिरूपत्वेन विवरणं तत् । शङ्खगदाद्युदायुधमित्यत्र क्रमेण शङ्खस्य गदायाः आदिपदोक्तस्य च उत्पदेनोच्चैः स्थापनबोधनादङ्गीकृतमिति प्रतिभाति । त्रिव्यूहत्वं च त्रिव्यूहकार्यस्यैव बहुशः करणादुक्तं ज्ञेयम् । वासुदेवकार्यस्य गीतोपदेशभीष्ममुक्त्यादौ क्वचिदेव करणादितिभाति इन्द्रियेत्यादिपक्षे व्युत्पादयितुमवतारयन्ति। शङ्खेत्यादि । पद्मस्य देहरूपता ताञ्चोपपादयन्ति । प्रकृते इत्यादि। तथेति च पद्मस्य देहरूपत्वमायुधरूपत्वं चेत्यर्थः । तेजोरूपमिति। अन्तःकरणस्य सात्विकाहङ्कारकार्यत्वात्प्रकाशकत्वेन तेजोरूपम्। पक्षान्तरमवतारयति। स्वयमित्यादि । इदं च अपान्तत्वं दरमित्यादेरेव प्रपञ्चरूपं ज्ञेयं शेषं स्फुटम्। श्रीवत्सलक्ष्ममित्यत्र। अत्रत्यन्वयपूर्वात्सामलोम्नः। इत्यत्राजिति योगविभागादच् । पद्मनाभ इतिवत् विशेषणान्तरेष्वपि व्यावर्त्तकस्य सत्वादत्रैव यल्लक्ष्मत्वमुक्तम्। तत्तात्पर्यं श्रीवत्सेत्यादिना वदन्तीत्याशयेन टिप्पण्यां तद्विवृण्वंति। श्रीवत्सेत्यादिना अत्रेति अस्मिन्विशेषणे। स्थानासाधारणधर्ममिति। स्थानरूपमसाधारणधर्मम्। तथाचास्य मुख्यत्वा-

दत्र लक्ष्मपदप्रयोग इत्यर्थः । कथं मुख्यत्वमित्याकांक्षायामाहुः। अस्येत्यादिभावइत्यन्तं अत्रेति मुख्यत्वे। अतएवेति मुख्यलक्षणत्वादेव तद्वत्इति त्रिब्रह्मवतः । गतिरितिमहत्वपरीक्षार्थगमनं तथेति मुख्यत्वं। तथाच यदि तत्र भगवति पुरुषोत्तमत्त्वं न स्यात्तदा महत्वपरीक्षार्था भृगोर्गतिस्तत्र न पर्यवस्येत यत एवमतः श्रीवत्सस्य ब्रह्मत्वान्मुख्यत्वमित्यर्थः। प्रकारान्तरेणापि भृगुपदस्य नानुचितत्वमित्याहुः। किञ्चेत्यादिना। तथाच तज्जातो भृगुरपि विशिष्ट इति नानुचितत्वमित्यर्थः। इदं प्रकारान्तरेणाहुः। स्पर्शेत्यादि । अनुचितत्वपरिहारायैवमुपपत्तित्रयेण भृगोरक्षरात्मकत्वं तेन श्रीवत्सस्याक्षरात्मकत्वं च समर्थितं सुबोधिन्यां अस्मिन् विशेषणे पूर्वोक्तमैश्वर्यनिरूपणं निगमयन्ति। ब्रह्मेत्यादि ब्रह्मणो अक्षरस्योक्तरीत्या निरूपितेन लक्षणत्वेनैव भगवतो क्षरप्रयोजकत्वरूपमैश्वर्यं निरूपितमित्यर्थः। अग्रिमविशेषणमवतारयन्ति। वीर्यमित्यादि स्वरूपसामर्थ्यं हि वीर्यं तदत्र मुक्तजीवं। स्वाधीनकरणलक्षणं। तन्निरूपयन् कण्ठाभरणतयाऽवस्थितं जीवस्वरूपं लक्षणान्तरत्वेनाहेत्यर्थः । अङ्गातरे अस्थापयित्वा यत्कौस्तुभस्य कण्ठे स्थापनं तत्तात्पर्यमाहुः। क्रियाशक्तेरित्यादि। क्रियाशक्तिर्हस्तादिः।ज्ञानशक्तिः कण्ठदेशः पश्यन्त्यनन्तरमध्यमास्थानत्वेन ज्ञानप्रत्यासन्नत्वात्। अतः सोत्तमेति तथेत्यर्थः। तदेव टिप्पण्यामाहुः। सरस्वत्यादि। पीताम्बरमित्यत्र तथात्वहेतुभूतामिति। जीवत्वप्रयोजकभूतां नन्वम्बरस्य मायात्वे पीतत्वं नोपपद्यते। तस्या लोहितशुक्लकृष्णवर्णत्वेन पीतत्वस्य तत्रानुक्तत्वादित्यत आहुः। पीतत्वमित्यादि। रजस्तमोगुणजन्यं यत्सुवर्णं तत्सम्बधादित्यर्थः। तदुपपादयन्ति। अन्यथेत्यादि । न तथाचेदमागन्तुकरूपमित्यर्थः तत्रास्पृष्टं लिङ्गमानत्वेनाहुः व्यामोहिकेत्यादि । तथाचवैरञ्चपञ्चममिति प्रथमस्कन्धवाक्याद्वैरजनकस्य सुवर्णस्य तथात्वेन तन्मूलभूता सालयविक्षेपात्मिकेत्यर्थः । पीताम्बरमित्यनेन यशो निरूपितं ज्ञेयं प्रथमस्कन्धे सम्यक्तेनरूपेण वर्णनयोग्यं गुणक्रियादिपौष्कल्यं यशः आश्चारोत्कर्षाधायकः सर्वजनाल्हादको विसर्पिगुणोपि यश इति च पृथ्वीवाक्यव्याख्याने तत्स्वरूपस्योक्तत्वात् तच्च गुणपौष्कल्यमात्राऽऽभासे जीवानामित्यादिनोक्तम्।यादृशी सापि प्रदेशविशेषां वरिकैव ननु तं वशयितुं समर्थेति। सान्द्रेत्यत्र टिप्प-

ण्यां । भूमेरित्यादि अयं च प्रकारो निबन्धे । त्रुटितः उपलक्षणविध-या व्याख्यातो ज्ञेयः । तदेव स्फुटी कुर्वंति अथवेत्यादिना अत्र रूप विषये किञ्चिदाशंक्य परिहरन्ति । हेतेत्यादि जानीहीत्यन्तं । तथाच निबन्धे आकाशपक्षस्य यद्व्याख्यानान्तरं प्रभुभिः कृतं तत्र प्रमाणप्र-करणोक्तमेव बीजमिति न तस्याचार्योक्तिविरुद्धत्वमिति बोधितम् । नचैवं सत्येते पक्षा अत्राचार्यैः किमित्युक्ता इतिवाच्यम् । वासुदेवादि व्यूहसाहित्यस्यात्र सत्वेन तद्रूपबोधनार्थत्वात् । नन्वनौपाधिकं चे-द्रूपं मूलाभिप्रेतं स्यात्तदा पयोदद्दष्टान्तो नोक्तः स्यात् पयोदे नील-त्वस्य प्रावृट्कालोपाधिकत्वादित्याशङ्कायां तत्तात्पर्यमाचार्यैस्तस्य ध-र्मा इत्यारभ्य स्निग्धप्रावृड्घनश्याम इत्यर्थः । इत्यन्तेन निरूपितम् । त-थाचैतद्बोधनार्थं प्राकृतोपमानत्वौपाधिकरूपबोधनार्थं अत सद्वस्तु नस्तादृशत्वमभिप्रेत्यैवोक्तमित्याशयेनाहुः । यस्त्वित्यादि । तथाच तस्य परोक्षत्वाऽपरोक्षवादत्वेनाप्युपपत्तित्वं ज्ञेयम् । अतो नैवमित्यत आहुः।अन्नेत्यादि। तथाच प्रतिष्ठाश्रुत्या लीलास्थानत्वमभिप्रेत्य उक्त-मिति श्रीरूपत्व ब्रह्मरूपत्वञ्च न विरुद्धमित्यर्थः । शेषं स्फुटम् ॥ ९ ॥

महार्हेत्यत्र सुबोधिन्यां । भक्ताविति भक्तौ सत्यामित्यर्थः टिप्प-ण्यां । अत्रापि तद्रूप इतिमौलौ किरीटरूपः । अवगम्यते शास्त्रप्रा-यपाठादवगम्यते । तथात्वमिति । शास्त्राभिज्ञत्वं । तादृश इति शिष्यनिष्ठभगवद्भक्त्या प्रसन्नः शास्त्रत्रयाभिज्ञः ( यथामात्वमिति । शास्त्राभिज्ञत्वं । तादृश इति शिष्यनिष्ठभगवद्भक्त्या प्रसन्नः शास्त्रत्र याभिज्ञः ) यथा माहापौरुषिकत्वेन प्रसीदन् शुकस्तथा उद्दामेत्यत्र सुबोधिन्यां । एवं लोके ज्ञानमिति । शास्त्रीयत्वेन रूपेण लोकेऽने कविधतां प्राप्तं भगवद्विषयकं ज्ञानमित्यर्थः । चतुर्भुजमित्यत्र यत् ज्ञानं निरूपितं तदलौकिकमिति ततो भेदज्ञापनायात्र लोकपदं जनयिष्यन्तीति । कर्मणा सजातीयोत्पादनस्वभावत्वाज्जनयिष्यन्ति । हिंसाप्रचुरापीति । अनेन वैराग्यरूप्यता स्फुटीकृता बोध्याः । शङ्ख-गदादीत्यत्रेवात्र वैदिककृतेः लौकिकदुःखनिवर्त्तकत्वात् । तत्र साध-नानीति । काञ्चीरूपे वैदिककर्मणि उपकरणानि । अङ्गदानीत्यादि । अत्र बहुवचनं चतुष्टयत्वस्मारणाय बाहुमध्ये तिष्ठन्तीति कर्मत्वोप-पादनाय इदमेव टिप्पण्यामितरयोरित्यादिना विवृतम् । समानयो-गक्षेमत्वं कङ्कणानामपीति न पृथक् तदुक्ति । अङ्गदानां सात्विकत्वे

हेतुमाहुः। अङ्गद्यतीत्यादि । कर्मणः सुकृतः स्याद्दुरिति वाक्यात् विदेहकैवल्यसम्पादकत्वेन सात्विकं तदित्यर्थः । तदिति। कङ्कणमित्यर्थः। राजसत्वं च तस्य चलत्वाद्भाति । नन्वेकस्यामेव क्रियाशक्तौ प्रतिष्ठितयोः शास्त्रबोधितकर्मरूपयोस्तयोर्द्वैविध्यं कथं सङ्गच्छत इत्यत आह । सात्विकेत्यादि । कर्त्रोरितिशेषः। विलक्षणाधिकारिकर्तृत्वेनैकस्य कर्मणो विलक्षणत्वञ्च गीतायां नियतं सङ्गरहितमित्यादिना स्फुटमिति न सङ्कालेशः। तैरिति । शास्त्रोक्तकर्मरूपाभरणैः। तैर्विरोचमानत्वे गमकमाहुः । वेदइत्यादि। हरिवंशे पुष्करप्रादुर्भावसमाप्ताविदं पद्यम्। शुकआइेति । दर्शनाङ्कनार्थकमैक्षतेति पदमाहेत्यर्थः ॥ १० ॥

स विस्मय इत्यत्र। एतत् सर्वपरिज्ञानइति। दानस्तोत्रस्वाधिकाराणां परिज्ञाने। पूर्वोक्तइति ईक्षणकर्तृत्वेनोक्तः शुद्धसत्वात्मकः। अलभ्यलाभादित्यादि। एतेनार्थिता उक्ता। नैमित्तिकमपीति। नैमित्तिकविषयकमित्यर्थः। तादृशा इति समीचीन भ्रमयुक्त इत्यर्थः॥११॥

अथैनमित्यस्याभासे। प्राकृतएव तस्य संस्कार इतिप्राकृते पुत्रे जाते तस्य पुत्रस्य संस्कारः ॥ १२ ॥

विदितोसीत्यत्र। ज्ञातस्वरूपस्तोत्रे इति ज्ञातस्वरूपाभ्यां कृतस्तोत्रे इत्यर्थः। ज्ञातस्वरूपत्वं व्युत्पादयन्ति । यस्त्वित्यादि। तथाच यश्चाक्षुषत्वेन प्रतीयसे सोऽपि त्वं पुरुषोत्तमत्वेन विदित इत्यर्थः। नन्वत्र मूले युष्मशब्दाभावात्कथमेवं व्यवहारोक्तिरित्यतस्तदाशयं टिप्पण्यामाहुः। अत्रैवमित्यादि। व्यवहारमात्रोक्तिरिति तदभावेऽपिव्यवहारमात्रोक्तिः । अन्यलभ्यत्वाभिप्रायेणेति । शब्दार्थस्याक्षेपलभ्यत्वाभिप्रायेणेत्येतदर्थम् । व्यवहारोपपादनायाक्षेपलभ्यस्यापि ग्रहणे विद्वत्सम्मतिमाहुः। अतएवेत्यादि। अतएवेति। व्यवहारस्योपपाद्यत्वादेव तथाचासीतिप्रयोगेण शब्दएवाक्षिप्यत इतिभवत्पदेन वेदनकर्माकाङ्क्षा पूर्त्तावपि यदेवं प्रयोगस्तच्चाक्षुषत्वेन ज्ञायमानस्यैव विदितत्वज्ञापनार्थ इति सुबोधिन्याशय इतिभावः। कल्पनाक्लेशापरिहाराय पक्षान्तरमाहुः। वस्तुत इत्यादि। समस्तम्पदमिति। असीतिविभक्तिप्रतिरूपकमव्ययम् । तेन सहसमासं प्राप्तमेकं पदम्। तथाच यथाऽस्तिक्षीरागौरित्यादावस्तीत्यव्ययं प्रथमपुरुषार्थे तथासीत्यव्ययमपि मध्यमपुरुषार्थे तस्य च भवच्छब्देन समासे पूर्वो-

क्तोर्थोसीतिकल्पना क्लेशश्च न भवतीत्यतस्तथेत्यर्थः । भवच्छब्द सङ्गत्यभावारुच्यते । अध्याहृतेनत्वं पदेन भवत्पदकार्यसिद्धेस्तदसङ्गत्यरुच्या तदभिमानित्वेनेति भातीति भवान् प्रकाशमान इत्यतोभिमानित्वेन सुबोधिन्यां प्राकट्यकरणादिति कौस्तुभपीताम्बराभ्यां प्राक्प्रकरणात् टिप्पण्यां तत्परिहार इत्यर्थः । इदं चाग्रे एतद्वांदर्शितं रूपमिति भगवद्वाक्याच्च स्फुटी भविष्यति । तथोक्तत्वादिति । ज्ञातत्वस्योक्तत्वात् । ननु ज्ञातत्वस्य प्रामाणिकत्वे अप्राप्य मनसा सहेति श्रुतिविरोधस्तु दुष्परिहरइत्यतं आहुः । अन्यदेवेत्यादि । अपि शब्दानन्दं ब्रह्मणो विद्वानिति श्रुतिः संगृह्यते । अन्यथेति । समानकारणयोरेकविषये विदितत्वाविदितत्वयोः प्रामाणिकत्वे । तथाच वदतोव्याघातपरिहाराय विदितत्वाविदितत्वयोः स्वरूपभेदे सिद्धे लौकिकविदितत्वाद्भिन्नत्वस्य सिद्धत्वे सुखेन तस्यापि परिहार इत्यर्थः । सुबोधिन्यां अत इति । अनुभवानन्दावेव स्वरूपं यस्येत्युद्देश्य विधेय भावादित्यर्थः । परोक्षापरोक्षान्तर्यामिरूप इति अदृश्यरूपो दृश्यरूपोऽन्तर्य्यामिरूपश्चेत्यर्थः । आत्मेति । सर्वात्माषड्विध इति । क्षराक्षरपुरुषोत्तमान्तर्य्यामिदेहजीवभेदेन षड्विधः । यद्वा । सैंधवघनदृष्टान्तात् पूर्वमाधिभौतिकादित्रयरूपेणात्र सर्वान्तर्यामिदेहजीवरूपेणेत्यर्थः ॥ १३ ॥

स एवेत्यत्र । कश्चन प्रकार इति । तथाच तैः प्रकारैर्यथा न सर्वरूपत्वव्यापकत्वादिहानिस्तथाऽनेनापीत्यर्थः । तथापीति । वैदिकप्रकारेपीत्यर्थः । आहेति । प्रवेशस्य भावनामात्रत्वादप्रविष्टत्वमाहेत्यर्थः । तदुपपादयन्ति । योगेत्यादि । यथानुगमाधिकरणविषयवाक्ये योगबलादिन्द्रः परमात्मनि प्रविष्टस्तथेत्यर्थः । दक्षिणायां वेति वा शब्द इवार्थे ज्ञेयः । प्रकारान्तरेणापीन्द्रप्रवेशमाहुः । दितेरित्यादि । तथेति । सोपाधिकः कार्याभिनिविष्टश्च वा । तथाचानुपाधिकत्वं कार्यार्थतया प्रवेशभावनाचोपपद्यत इत्यर्थः । प्रकारसंदेहं परिहर्तुं व्युत्पादयन्ति । तर्हीत्यादि । इत्यर्थः इत्यन्तम् । आधिदैविकस्वभावेनेत्यस्य तात्पर्यं तत्र प्रमाणञ्च टिप्पण्यामाहुः आधिदैविकेत्यादि । सुबोधिन्यां अपेक्षत इति । साक्षित्वप्रकाशननियमाद्यर्थमपेक्ष्यते । ननु स्वार्थसृष्टाविति । स्वार्थसृष्टौ कारणतया विद्यमाने नैवरूपेणान्तर्यामिकार्यस्य च कारणान्नापेक्ष्यते । ननु तमद्भुतमित्यत्र लीलाप-

योगीप्रपञ्चस्य ब्रह्मात्मकत्वमभिप्रेतमित्युक्तम् । इह तु त्रिगुणात्मकत्वमुच्यत इति कथमविरोध इत्यत आहुः। यथेत्यादि ज्ञेयेत्यन्तम् । मायासाम्यस्य दौर्बल्यमभिप्रेत्य पक्षान्तरमाहुः । अत्रिगुणात्ममिति वेति अकारप्रश्लेषमनङ्गीकृतपक्षान्तरद्वयमाहुः। यद्वेत्यारभ्य उक्तरीत्येत्यन्तम् ॥ १४ ॥

यथेमे इत्यत्र । सुबोधिन्याम् । प्रतीयन्त इति । शरीररूपेण पृथ्वी । मुखे मुख्या आपः कान्तिरूपं तेजः सर्वत्र । प्राणरूपो वायुर्नासिकायाम् । छिद्रेष्ववकाशरूपेणाकाश इत्येवं प्रतीयन्ते । तत्राहेति । तादृश्यामाशङ्कायां स्वरूपे प्रतीयमानानां तेषां दृष्टान्तमुखेनेत्यर्थः। दृष्टान्तं व्युत्पादयन्तो मूले यथेत्यस्य विराजं जनयति हीति चतुर्थपादेनान्वय इत्यभिप्रेत्य व्याकुर्वन्ति।यथेत्यादिप्रतिपादितानीति। उपलक्षणविधया प्रतिपादितानि तत्रतत्रेति।तेषु तेष्विन्द्रियेष्विव तेषु तेषु तथैवेति। तादृशैरविकृतसदृशैः । अयं मूलस्थस्य तथात इत्यस्य विवरणम् । त इति वक्ष्यमाणा ये विकृताः । वस्तुतस्तु तथैव विकृतैः सहेति पाठो भाति । सहेत्यन्तस्य एकस्मिन्नित्यग्रिमग्रन्थेनान्वयः नानावीर्या इत्यादिकन्तुविकृताविकृतयोः साधर्म्यबोधनार्थम् । शेषं स्फुटम् । तथा सत्येवं योजना । इमे अविकृता भावा नानावीर्याः पृथग्भूतास्तथा तादृशास्ते वक्ष्यमाणाः विकृता भावाः। तथैवेति वा पाठः विकृतैः सह यथाविराजं जनयन्ति हीतिबोध्यम् । एवं दृष्टान्तं व्याख्याय दार्ष्टान्तिके योजयति । तथाप्रकृतेपीत्यादि तानीति। विराड्जनकान्यविकृतानि तत्त्वानि । न कोऽपि दोष इति पृथिव्यादि भूतदर्शनकृतो यः स्वरूपेऽनित्यत्वविकृतत्वादिप्रतीतरूपो दोषः सोऽपि नेत्यर्थः।नच विकृतैस्तथैवेत्यादिना चतुर्विंशतितत्त्वानां विकृतत्वं आधिदैविकं तत्र प्रवृष्टेन प्राकृतत्वं कथं प्रकृतितत्त्वे विकृतत्वकं कथं सङ्गच्छते प्राकृतत्वये सांख्यैः पौराणिकैश्चानङ्गीकारादिति वाच्यम् । एकादशस्कन्धे द्वाविंशाध्याये।प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ एष वैकारिकः सर्गो गुणव्यतिकरात्मक इत्यादिना प्रकृतिपुरुषयोरपि विकल्पत्ववैकारिकत्वगुणव्यतिकरात्मकत्वानां भगवतैवाङ्गीकारात् । सिद्धान्तस्य च भगवत् प्रतिपादितत्वात् ब्रह्मवादे ब्रह्मातिरिक्तस्य सर्वस्यापि विकारत्वात् । याच द्विकारन्तु विभागो लोकवदिति सूत्रोक्तन्यायकृतत्वेप्यङ्गीकारे बाधकाभावाच्चेति ॥ १५ ॥

अग्रिमे ततः कथमिति । कारणरूपेण पृथिव्यादिप्रतीतौ भवतु समाधानं ननु कार्यरूपेणापि प्रतीतौ । कार्यस्य जन्यत्वादतः कथं तत्राहेति । तादृश्यामाशङ्कायां त्वगाद्यात्मककार्यरूपेणापि प्रतीयमानस्य दृष्टान्तमुखेन नित्यत्वमविकृतत्वं चाहेत्यर्थः । मिलित्वेति । पूर्वं विकृतैः सहेत्युक्तं । स सहभावः निमित्तभूतानामिवापि सम्भवतीति तद्व्युदासार्थं दुग्धं जलादिवदुपादानत्वेन मिश्रिभूय पूर्वानुवाद इति । जनयन्तीत्यस्यानुवादः । वर्त्तत इति । तदभिध्यानादेव तु तल्लिङ्गात्स[1] इति न्यायेन वर्त्तते । अन्यथाकार्याजन्यात्कार्यान्तरं न स्यात् । अनुगता इवेति । पटे तन्तव इव समाविति । ब्रह्माण्डे अन्यदपीति । तेजोवायुव्योमापि । तथाचानुगतत्वात्कार्ये कारणभूतानां तत्त्वानां सत्तादृष्टान्तेनोपपादिता । अतः परं तेषां तत्त्वानां बीजाङ्कुरवत् कृत्स्न[2]प्रसक्तिवारणायावतारयन्ति । तर्हीत्यादि । भगवन्वीति कार्यमात्ररूपा भवन्तु समाधिं व्याकुर्वन्ति । प्रागित्यादि । इहेति । स्वरूपे[3] ब्रह्माण्डोपरि च इहोत्पत्तिरिति कार्ये पुनरुत्पत्तिः । विलक्षणत्वादिति । कृत्स्नप्रसक्तिवारणार्थं कार्याऽनवयवतयातिरिक्तत्वेन विद्यमानत्वात् । ननु तत्रानुगमो बीजाङ्कुरन्यायेनास्तु जातेऽङ्कुरे कथमिहोपलभेद्बीजामिति सप्तमस्कन्धे प्रल्हादवाक्याच्चेति चेत्तत्राहुः।साक्षादित्यादि । तथाच। त्वगादीनां बीजाङ्कुरन्यायकप्रवेशस्तु मातापित्रोः शरीरे तेषां विद्यमानत्वप्रतीत्यैव बाधित इत्यर्थः । एवमाधिदैविकानां कारणभूतानां तत्त्वानां व्यतिरेकं दृष्टान्तेन साधयित्वा फलितमाहुः । यथेत्यादि । न कोऽपि विरोध इति शास्त्रसिद्धत्वात्तद्विसंवादिप्रतीतकृतो विरोधोऽकिञ्चित्करत्वान्नेत्यर्थः ॥ १६ ॥

अग्रिममवतारयन्ति । एवमित्यादि । अतिदेशियुक्तिमाहुः । अन्यथेत्यादि । तथाच व्यावहारिकः प्रपञ्चः स्वसत्तोत्कृष्टसत्ताकप्रपञ्चपूर्वकः मायिकप्रपञ्चत्वात् ऐन्द्रजालिकप्रपञ्चवदितिन्यायेन पारमार्थिकप्रपञ्चसिद्धौ पश्चात्तत्स्वरूपे विचार्यमाणे । यदेकमव्यक्तमनन्तरूपमिति । यदक्षरे परमे प्रजा इत्यादिजातीयकश्रुतिभिः द्वितीयस्कन्धीयचतुश्लोकोक्तप्रकारेण च ब्रह्मरूपत्वं पर्यवस्यति । एवं ब्रह्मणः

---

१ आकाशाद्वायुरित्याद्युत्पतिस्तद् आब्रह्मण एव तदात्मकत्वात् स ईश्वर एव कर्त्ता, तत्र हेतुः तल्लिङ्गात्सर्वकर्तृत्वस्य ब्रह्मलिङ्गत्वात् ।

२ साकल्येन—सर्वभावेनेत्यर्थः । ३ विराड्स्वरूपे ।

सर्वाकारत्वे सर्वात्मकत्वे च सिद्धे नाद्वैतश्रुतिविरोधः। अविद्यादिव-
दभेदस्यापि भेदाविरुद्धसम्पद्रूपत्वादिति इदं चादृश्यत्वादिगुणाऽधि-
करणादवगन्तव्यं बुध्यनुमेयेत्यत्र दूषणान्तरं व्युत्पादयन्ति। नन्वि-
त्यादि अन्यथेति। साधनं विनैव दृश्यत्वे सर्वमुक्तिश्चेति चकारेण-
सर्वाभावकृतो लीलाया अभावः समुच्चीयते। हीति श्रुतिविरोधरू-
पाद्धेतोः तत्राहेति तादृश्यामाशङ्कायां इन्द्रियसामर्थ्येनाग्राह्यत्वादि-
कमाहेत्यर्थः। तदुपपादयितुं व्याकुर्वन्ति। बुद्ध्येत्यादि। बुद्ध्येति उप-
लब्ध्या लक्षणमिति। ज्ञानकरणत्वम्। सामर्थ्यमिति। दर्शनाभावे-
नैव तथा निश्चयादित्यर्थः। ननु माऽस्तुलौकिकेन्द्रियग्राह्यत्वं तथा-
प्याधिदैविकेन्द्रियाणां भगवद्विभूतिरूपत्वाद्भगवतस्तद्ग्राह्यत्वंत्व-
दण्डवारितमित्यत आहुः। नवेत्यादि अन्यार्थमिति। लौकिकेन्द्रियेषु
सामर्थ्याधानार्थम्। तथाच यथा उदरम्दहरविद्यायां नाडीरुपक्रम्य
अमुष्मादादित्यात्प्रतयन्त इत्यादिनोक्तो नाडीसूर्यरश्मिसम्बन्धः
देहान्निषुमणसमये जीवस्य मार्गप्रकाशनमात्रं करोति नतु कार्यान्तरं
तद्वदित्यर्थः। ननु सामर्थ्याधानवद्ग्राहकत्वमप्यङ्गीकार्यमिति चेत्त-
त्राहुः। ग्राह्येत्यादि। इन्द्रियैर्यद्ग्राह्यं रुपादितत्स्वरूपत्वादित्यर्थः।
इदञ्च द्वितीयस्कन्धे प्रथमाध्याये घ्राणञ्च गन्ध इत्यादौ स्पष्टम्।
ननु तथापि तेषां देवरूपत्वेन सत्वप्रधानत्वाद्भगवद्ग्रहणसामर्थ्यं
कल्प्यमितिचेत्तत्राहुः। नवेत्यादि। विषयाणां सम्बन्धि यः सन्निक-
र्षः संयागरूपः स स्वाधिदैविकैः सह न किन्त्वाधाराधेयभावरूपः
स्वरूपसम्बन्धस्तस्मिंश्च ग्राहकसम्बन्धत्वं न क्वचित्सिद्धमतो न
कल्पयितुं शक्य इत्यर्थः। सिद्धमाहुः। अत इत्यादि। यत आधिदै-
विकानामन्यार्थत्वग्राह्यस्वरूपत्वाभ्यां न ग्राहकत्वमाध्यात्मिकानां तु
सन्निकर्षराहित्यान्न तथात्वमतो न ग्राह्य स इत्यर्थः। ननु माऽस्तुवि-
षयप्रत्यक्षे भगवद्ग्रहः सन्निकर्षाद्यभावात्। इन्द्रियाधिदैविकरूपाणि
तु इन्द्रियमध्यवर्त्तीन्येव तथाचेन्द्रियं स्वस्वरूपं गृह्णन्तत्स्वरूपमपि
गृह्णात्विति चेत्तत्राहुः। इन्द्रियाणामित्यादि। आत्माग्राहकत्वादिति।
इन्द्रियस्वस्वरूपाग्राहकत्वात्। तथाच तन्न स्वयं स्वग्राहकमतस्त-
त्सहभूतस्य भगवतोऽपि न ग्राहकमित्यर्थः। नन्विन्द्रियाणामप्रत्यक्ष-
त्वं चेत्तर्हि इन्द्रियसद्भावे किं मानमित्याकाङ्क्षायां नैयायकादिप्रसि-
द्धमनुमानमेव मानत्वेनाहुः। अत इत्यादि। तथाचानुमानमेवतत्स-

द्भावे प्रमाणमित्यर्थः । एतेन मूलस्थं बुध्यनुमेयलक्षणैरिति पदं व्याख्यातं ज्ञेयम् । तेन सिद्धमाहुः । अनेनेत्यादि । युक्तिरप्रयोजकेति दृश्यस्य प्राकृतत्वकथने दृश्यस्याप्राकृतत्वं यदङ्गीकृतं सा युक्तिरनुकूलतर्कशून्येत्यर्थः । एवमप्रत्यक्षत्वेनाप्राकृतत्वेन व्याप्तौ दूषितायां पुनराशङ्कान्तरमवतारयन्ति । नन्वित्यादि । प्रसिद्धानुमाने यथा व्यापकस्य वह्नेर्व्यभिचारो न दोषाय तद्वदत्र अप्राकृतोऽप्रत्यक्षत्वादित्यनुमानेऽप्यप्रत्यक्षत्वस्य व्यभिचारो न दोषाय अयं प्राकृतः प्रत्यक्षत्वादित्यनुमानाङ्गीकारात् तथा सति यत्प्रत्यक्षं तत्प्राकृतमेवेति व्याप्तौ तु न दोषोऽतस्तथेत्यर्थः समाधिं व्याकुर्वन्ति । सर्वत्रेत्यादि । तथाच व्यतिरेकव्याप्त्या अप्रत्यक्षत्वस्यापि सिद्धेर्लौकिकरूपादिसम्भूतस्याप्यप्रत्यक्षत्वान्नानन्दमयत्वबाध इत्यर्थः । पुनराशङ्कते । कचिदित्यादि । तत्राहेति । बाधकयुक्तेरप्रयोजकत्वमाहेत्यर्थः । तद्व्युत्पादयन्ति । नहीत्यादि । न दुष्टं भवतीति प्राकृतः कचित्प्रत्यक्षत्वादित्यनुमानेऽपि हेतोरिन्द्रियसामर्थ्येनोपहितं व्यभिचारित्वमप्रयोजकत्वं चेत्यतो नानेन हेतुना दर्शनं दुष्टं भवतीत्यर्थः । दोषं व्युत्पादयितुं प्रमाणमाहुः । पराञ्चीत्यादि । तथाच पराकूपदादिन्द्रियसामर्थ्येनोपहितत्वमैक्षदित्यनेन व्यभिचारः श्रुत्या प्रदश्यते । तत एवाप्रयोजकत्वमपि सिध्यतीति श्रुतिरेवात्रमानमित्यर्थः । सिद्धमाहुः । तस्मादित्यादि । तस्मादितिश्रुत्या प्रतिपक्षहेतौ दोषप्रदर्शनात् । उत्तरार्द्धमवतारयन्ति । भिन्नत्वेनेत्यादि । बाह्यपरिहारं व्याकुर्वन्ति । बाह्येत्यादि । पूर्वमवोचमितितृतीयस्कन्धे कापिलेये आकाशलक्षणे बहिरन्तरमेव चेत्यर्थः । तदपीति आकाशकृतं बाह्याभ्यन्तरत्वमपि । अन्यस्मादिति दृष्ट्वा उपपादितेवेति । भगवदिच्छयैवोपपादिता । तथाच न बाह्यत्वप्रतीतकृतआनन्दमयत्वबाध इत्यर्थः । एतेनैवाभिन्नत्वं कृतस्यापि परिहारमाहुः । परीत्यादि । परिछिन्नत्वे हि भिन्नत्वं व्यापकत्वेन तस्मिन्परिपहृताभिन्नत्वमपि परिहृतप्रायमेवेत्यर्थः । कथमित्याकाङ्क्षायां तत्र हेतुत्रयमवतार्य व्याकुर्वंति । अस्मिन्नित्यादि । विवेचनीय इत्यन्तं व्यावर्त्तकत्वमिति भेदकत्वं । अग्र इति उलूखलबन्धस्थले तथाच परिछिन्नतयाभिन्नात्वस्यापि स्वेच्छया कृतत्वात्रतत्प्रतीत्याप्यानन्दमयत्वबाध इत्यर्थः । एवमेतैः श्लोकैर्दोषपरिहारेण विदितोऽसीति प्रतिज्ञा समर्थिता । उपसंहरति ॥

एवमित्यादिवैदिकप्रकारे यज्ञोऽग्निहोत्रादिपञ्चात्मकः । अत्र च भिन्नत्वनिराकरणे सर्वस्य सर्वस्य सर्वात्मन इति विशेषणद्वयेन सर्वरूपत्वसर्वात्मकत्वप्रतिपादनात् पञ्चात्मकः स भगवानिति पञ्चरात्रस्मृत्युक्तपञ्चात्मकत्वस्याप्यर्थादेव सिद्धेः श्लोकसंख्या सूचिता यज्ञात्मकताप्यर्थादेव सिद्धा । उत्तरकाण्डोक्तं साकारं ब्रह्मत्वं तु व्याख्यानेन समर्थितमतो वैदिकप्रकारेण तथानिरूपित इत्यर्थः अग्रिमे ॥ १७ ॥

एवं वैदिके प्रकारे निरूपिते सति य आत्मन इतिवक्ष्यमाणश्लोकस्थं प्रमेयं भगवत्पक्षे पुनरुक्तं भवति प्रपञ्चपक्षे च सर्वात्मकत्वविरुद्धं भवतीति कथमविरोध इत्याकाङ्क्षायां मतान्तरमिदमित्याशयेनाहुः । तन्त्रेत्यादि । प्रथम इति । परब्रह्मरूपः । यत्प्रवदन्तीति । इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव निजकारण मुक्तिदाता तस्याऽऽज्ञयैव नियता परमाऽपि रूपं वव्रे । द्वितीयमिव यत्प्रवदन्ति माया मिति पञ्चरात्रवाक्यात् । सृज्यत इति । नृसिंहोत्तरतापिनीयोक्तप्रकारकं व्यावहारिकमसत्सृज्यते । तन्मतमिति । तादृशं पञ्चरात्रं मतं अन्तरेव बहिर्वेति । स्वान्तरेव स्वस्माद्बहिः पराक् देशे वा आत्मभूतस्येति । केवलचिदानन्दरूपस्य । दृश्येष्विति । लौकिकेन्द्रियसामर्थ्येन दृश्येषु । आत्मनेति अन्तर्वर्तिना भगवता अनुभवातिरेकेणेति । प्रतिभासातिरेकेण आत्मनो बन्धकेष्वितिगुणशब्दस्यार्थः । गुणानां रज्जुरूपत्वेन दृष्टबन्धकत्वादिति । व्यवस्यतीति निश्चिनोति तादृशस्याबुधत्वं व्युत्पादयन्ति । अस्तीत्यादि । आत्मव्यतिरेकेणेत्यस्यैव व्याख्यानमात्मसम्बन्धेत्यादि न भवतीति तथाचानुवादस्य प्रतीतमात्रसापेक्षत्वात् प्रतीतेश्चाभावस्य सत्तामात्रात् दोषविशेषण द्विचन्द्रप्रतीतवत् सिद्धेरनुवादेनैव तदा कलितं भवतीति न तेन सन्घातसत्तासिद्धिरित्यर्थः। तत्राहेति। सत्वोत्पत्तौ प्रतीतौ दोषमाह। दूरेग्रहणादबुधएव सः । गृह्णातीति सत्वेन गृह्णीति । पुरुषोऽपि भूत्वेति पुरं उषति दहतीति पुरुषस्तादृशोऽपि भूत्वा । समीप इति गृह्यत इतिशेषः। तथाचासत्वसिद्धीत्यत्र सत्वशब्देन सत्ता ज्ञेया। अविचारेण ग्रहणात् । ग्रहणमिति । आदरेण । येनैव प्रकारेणेति । आत्मव्यतिरिक्तत्वेन न प्रकारेण तथाच व्याख्यानारम्भे अन्तरे वेत्यारभ्य चिदानन्दरूपो दृष्टव्य इत्यन्तेन यदुक्तं तदेव सिध्यतीति लौकिकेन्द्रियसामर्थ्येन दृश्येषु व्यावहारिकेषु संघातरूपेष्वर्थेषु वैराग्यार्थमसद्बुद्धिरेव कार्या ।

तद्वैव तथा दर्शनसिद्धिरिति व्याख्यानसंदर्भार्थः । नन्वत्र मायावादसिद्ध्या वैदिकसिद्धान्तविरोधः शङ्कनीयः । आभासाभास्ययोर्बिम्बप्रतिबिम्बयोश्च समानाकारत्वनियमेन तस्यैतत्प्रयोजकतयाविरोधाभावात् तन्मया पूर्वमनुमानेनैव साधितं । उत्तरतापनीयटीकायां भाष्यप्रकाशे च [illegible] दितमिति ततोऽवधेयं, एवमेव श्लोकं प्रभुचरणाः पूर्वोक्तब्रह्मवादरीत्या व्याकुर्वन्ते । अथवेत्यादि । दृश्येष्विति भगवदिच्छया भक्त्या दृश्यां । धर्मिग्राहकमानेनेति उभयव्यपदेशासूत्रबोधितेन इतिभावः । इतिहेतोस्तादृश्यमुपाददद्बुधएवेति भाव इत्यर्थः । तथाच तन्त्रेऽपि भिन्नस्य जगत एव वैराग्यार्थमसत्वमुच्यते नतु स्वरूपात्मकस्येति तन्त्रमयि वेदे न समानं मोक्षधर्मे पञ्चरात्रस्य तथात्वनिश्चायनादितिबोधनार्थमेवं व्याख्यातमतो न कोऽपि दोष इत्यर्थः । श्रीधरीये व्यवस्यत इत्यात्मनेपदमवदर्शनात्तस्मिन् पाठे पूर्वोक्तो न सङ्गच्छत इति तेन पाठेन व्याख्यानान्तरमाहुः । अथवेत्यादि । स्वस्य दृश्येष्विति स्वेन्द्रियसामर्थ्येन दृश्येषु करपादादिष्विति । भगवत् करपादादिषु वर्त्तमान इति व्याप्य स्थितः । तेष्वात्मत्वेनेति इदमस्वव्यतिरेकपदस्य व्याख्यानं । तथाच तेषु करपादादिषु भगवदभिन्नत्वेन जीववदभिमतादभिन्नत्वाज्जीववदभिमानेन भगवान् वर्त्तमान इति यो व्यवस्यते सोऽबुध इत्यर्थः ॥ १८ ॥

त्वत्तोस्येत्यत्र प्रद्युम्नरूपमिति यो भवान् प्रत्यक्षगोचरः परब्रह्मतया वासुदेवत्वेन निरूपितस्तमेवेश्वरत्वब्रह्मत्वाभ्यां प्रद्युम्नरूपत्वेन निरूपयतीत्यर्थः । निरूपित इति । पञ्चरात्रे निरूपितः । तत्प्रकारमाहुः । स्मृतिरित्यादि । प्रकृतिमिति । रजः सत्वतमोमयीभूतप्रकृति । प्रकृतौ । स्त्री एव प्रधानभूतेति । प्रकृतिसमीपे शाक्तमते स्त्री एव मुख्या । उत्पाद्यत इति । परुष उत्पाद्यते । वासुदेववदिति बिम्बप्रतिबिम्बन्यायेन । अस्तु तथैवेति । सामर्थ्यासाक्षात्कर्तृत्वमस्तु । अघटमानमेवेति । कर्तृत्वमभटमानमेव । तर्हि विरोध इति । सामर्थ्यसत्तायां विद्यमानायामप्यकर्तृत्वे सति कर्तृत्वाऽकर्तृत्वयोर्विरोधे । तत्राहेति । वासुदेवाद्भेदं वक्तुं कर्तृत्वाकर्तृयोर्विरोधाभावे हेतुमाह नैव कृत्येनेति नैकतरपरित्यागकल्पना । ननु ब्रह्मत्वेन सर्वभवनसामर्थ्येऽप्यविकृतस्य विद्यमानत्वाज्जगदकरणेऽस्त्येव विरोध इत्यत आहुः । किञ्चनेत्यादि नापेक्ष्यन्त इति कर्तृत्वार्थं नापेक्ष्यं ते वि-

रोधाभावमुपपादयन्ति। आज्ञेत्यादि। प्रकारान्तरेणाप्युपपादयन्ति। किञ्चेत्यादि। तथाचानीहत्वादिकं गौण्यात्रोच्यते। अतो न विरोध इत्यर्थः। तुरीयपादं व्याकुर्वन्ति। तथेत्यादि। तद्द्वारेति। आधारत्व-द्वारा। ननु पूर्वोक्तहेतुद्वयेन कर्तृत्वाकर्तृत्वयोरविरोधे सिद्धे पुनरुप-चारेणाविरोधसाधनस्य किम्प्रयोजनमित्याकाङ्क्षायां तत्प्रयोजनं टि-प्पण्यामाहुः। अविरोध इत्यादि। द्वितीयकोट्युपस्थितिरिति। कर्तृ-त्वकोट्युपस्थितिः। हेत्वन्तरमिति। गुणाश्रयत्वादिति हेत्वन्तरं। तच्छङ्कयेति। विरोधशङ्कया। तथाच मूलानुसरणं प्रयोजनमित्यर्थः। ननु मूले उपचारपक्षः किमित्युक्तं इत्याकाङ्क्षायां यत्सुबोधिन्यां व-स्तुतस्त्वित्यादिनोपपद्यत इत्यन्तेनोक्तं तद्विवृण्वन्ति। वस्तुतस्त्वि-त्यादिज्ञेयमित्यन्तं तथाच मूले गुणेषु कर्तृत्वोपचार इत्याशयो ननु भगवति तदुपचारएवञ्च सुबोधिन्यां गुणा एव कर्त्तार इत्यस्य अ-तएनेत्यस्याभिमानादेवेत्यर्थो ज्ञेय अतो न विरोध इत्यर्थः॥ २०॥

सुबोधिन्यां श्लोकार्थं निगमयन्ति। एवं जगत इत्यादि अग्रिमे वासुदेवात्। प्रद्युम्नतश्च वैलक्षण्येनानिरुद्धं निरूपयितुं पूर्वोक्तमनुव-दन्तः प्रस्तुतमवतारयन्ति। इदमित्यादि। प्रद्युम्ने प्रकृतिजननद्वार-इदमुत्पत्तिस्थितिप्रलयात्मकत्वमाध्यात्मिकत्वेन अध्यात्मं भवत्वेनो-पादानतया निरूपितम्। अतः परमाधिदैवं भगवत्वेन प्रयोजकतया अं-शत उपादानतया चानिरुद्धं जगत्कर्त्तारमुपपादयन्ति। तथाच वा-सुदेवस्तटस्थत्वेन प्रद्युम्नउपादानत्वेनानिरुद्धः प्रयोजकत्वादिना कारणमित्येवं भेदमुपपादयन्तीत्यर्थः। तद्व्युत्पादयन्ति। तथाच पि-तृवदंशाविशेषेणोपादानभूतः। कपिबलेन्द्रब्रह्मादिवदनेकधा स्वक्रि-यारूपव्यापारेण प्रयोजकश्चानिरुद्ध इति वासुदेवादिभ्यो विलक्ष-ण इत्यर्थः। व्याकर्त्तुमवतारयन्ति। तत्रेत्यादि शान्त्येति। स्वश्रिया शान्त्या। न गुणावताररूपेषु सत्वस्य श्यामस्तमसश्च शुक्लो वर्णो निरूपितः। प्रकृते च विपरीत इति कथं प्रसिद्धिभेदसमाधिरित्यत आहुः। प्रसिद्धिः कृते शुक्ल इत्यादि। उपाधिकालरूपाणीति। सत्वर-जस्तमसामुपाधिभूतकालरूपाणि। तदर्थमिति। रूपनिरूपणार्थं। तथाचात्र स्थितये सर्गाय जनात्यये इति कार्यनिर्देशात्सत्वतमसी-क्रियाव्याप्ते सती विपरीतरूपे भवति इति न गुणावतारवर्णवा-क्यविरोधः। यथा गन्धकधूमेन जवाकुसुमादेःश्वेत्यं धूमांतरेण शु-

क्रुपटादेश्वर्यामत्वं तद्वत् । वस्तुविशेषजन्यक्रियाविशेषजसंयोगस्यैव तत्र कारणत्वादिति न चात्र प्रद्युम्नानिरुद्धयोः क्रमेण निरूपणेकिंमानमिति वाच्यं श्लोकारंभे तत्तत्कार्यबोधकजन्मपदत्रिलोकास्थितिपदयोरेव मानत्वात् । तंत्र प्रद्युम्नस्य सृष्टिकृत्वेनानिरुद्धस्य पालकत्वेनैव प्रसिद्धत्वात् । उभयत्र कार्यांतरनिर्देशस्तु योग्यतामादाय । वासुदेवार्थत्वायवेति न कोपि दोष इति दिक् अग्रिमे संकर्षणात्मकमाहेति । कार्यनिरूपणमुखेन तथाहेत्यर्थः शेषं स्फुटम् ॥ २१ ॥

अयंत्वित्यत्र पूर्वार्थमिति । लक्ष्यत इतिवैयाकरणमतेन वाक्ये शक्तिमंगीकृत्य पूर्वोक्तरीत्याकंसकर्तृकोदायुधाभिसरणसंसर्गरूपस्य शक्यार्थस्य सम्बन्धोगमनादाविति तादृशोऽभिप्रायस्याजहत्स्वार्थया लक्ष्यते । तदवाचकत्वेऽपि तत्प्रतीतिजनकत्वमिति तात्पर्यलक्षणांगीकारे तु तात्पर्यगोचरीक्रियत इति वार्थो बोध्यः ॥ २२ ॥

अथैनमित्यत्र ॥ इति तदर्थमिति ॥ एवं प्रकारक श्रीदेवक्याशयज्ञापनार्थे तर्हीति । भगवन्निमित्तमेव ॥ २३ ॥

अष्टभिरिति । नन्वष्टभिः स्तोत्रोक्तौ पूर्वोक्तकारिकासु पञ्चभिरितिसंख्योक्तिविरोध इतिचेत् । अत्रेदं प्रतिभाति । पूर्वं द्वाभ्यां चैव तथा परिमितिचकारसूचितेन तृतीयेनापि प्रार्थनं लभ्यते । पञ्चभिः स्तुतिस्तु टिप्पण्यामुपपादितैव एवं सति त्रयमिदमपि तत्र संगृहीतमिति न विरोध इति अष्टानामर्थमाहुः आधिदैविकमित्यादि । रूपत्रयं क्रमतस्त्रयाणां हेतुस्तुरीयस्य प्रकृत इत्यारभ्य पंचमस्येदानीमित्यारभ्य सिद्धेदित्यंत षष्ठस्य । तत्तात्पर्यं टिप्पण्यामाहुः । युद्ध इत्यादि । रूपेत्यादि सप्तमस्य स्वस्येत्यादिकमष्टमस्य तदेतत्कारिकायां संगृह्णन्ति । रूपेत्यादि । प्रार्थना त्रितयमिति । तच्चतुष्टयघटितं श्लोकत्रयं । रूपादर्शनप्रार्थनस्य रूपोपसंहारप्रार्थनायामेव प्रवेशात्प्रार्थनात्रयं वा विज्ञानमित्यादिकं चतुष्टये प्रत्येकमन्वेतीति बोध्यम् रूपं यत्तदित्यत्र स्वाभिज्ञानमिति । स्वस्य भगवत्प्रत्यभिज्ञानं अन्यथेति अस्यापि लोकसिद्धत्वे आकांक्षावैपरीत्येपीति यत्प्राहुस्तद्रूपमित्याकांक्षायामपि । वैलक्षण्यादिति आधिदैविकादस्य वैलक्षण्वदित्यर्थः । अत्रैवेति । जगत्सलक्षणत्वेन प्रतीयमान एवास्मिन् रूपे । कारणस्य गुणातीतत्वे युक्तिमाहुः । गुणानामित्यादि कारणतेति कर्तृता तत्र हेतुः । स्वातन्त्र्याभावादिति। तथाच गुणानां कारणत्वे श्रुतिवि-

रोध इतिगुणातीतमेव कारणमित्यर्थः । नचितीति ज्योतिरित्यनेन चिद्रूपत्वमुक्तं तद्विरुद्धाश्च गुणा न तत्र संभवंतीत्यतोऽपि गुणातीतमेव कारणमित्यर्थः । प्रकृते सगुणत्वानुमापकमाहुः । यत्रैवेत्यादि । तथाचानया व्याप्त्या इदं सगुणं भूतादिमत्वा जगद्वत् यश्चैवं पुरुषवदिति चेद्विरुद्धसाधकमनुमानं प्रदर्शितं तेन सिद्धमाहुः । तदेवेत्यादि । उत्पत्त्यादीति । उत्पत्तिस्थितिप्रलयवृद्धिविपरिणामापक्षयाख्यषड्भावविकारयुक्त इत्यर्थः । प्रकृते सविकारत्वाद्यनुमापकमाहुः । लौकिकानीत्यादि । ज्ञानानीति । ज्ञानविषयाणि । इन्द्रियादिभिरिति । आदिपदेन सूर्यादिसंग्रहः । परप्रकाश्यत्वानुमापकमेतत् । तथाच प्रकृते ज्योतिरादिविरुद्धं विकारयुक्तत्वात् । रूपादिगुणयुक्तात् इन्द्रियादिप्रकाश्यत्वाच्च घटादिवत्प्रयोगो बोध्यः । नन्वानन्दांशे वक्तव्यं सत्तामात्रमिति किमित्युक्तमित्याकाङ्क्षायामाहुः । विषयेत्यादि । अत्र च सत्तापदेनोक्तरूपतया सत्तात्मैव सर्वशब्दवाच्य उच्यते । तथाच त्रैकालिकाबाधितसत्तामात्रत्वेन भूमरूपता[१] बोधिता । तेनानन्दांशेऽपि न विषयकृतं वैलक्षण्यमित्यर्थः । तर्हि निर्विशेषपदस्य किं प्रयोजनमित्यतस्तदवतारयन्ति । सर्वमित्यादि । विशेषनामरूपधर्मवादिति । विशेषभूता ये नामादयस्तद्युक्तम् । इयं व्याप्तिरिति । सामान्यत्वेन विशेषत्वेन व्याप्तिः । इतीति । एतत् ज्ञापनार्थम् । अन्यथेत्यादि । तद्भिन्नाभिन्नत्वे सति तदभिन्नत्वस्य मात्रपदार्थत्वात्सत्तामात्रपदेनैवाशेषराहित्यप्राप्तौ इयं व्याप्तिरलौकिके कुतो नेत्याकाङ्क्षायां तत्र तदभावं व्युत्पादयन्ति । विशेषाहीत्यादि । मूलसत्तायामिति । आत्मरूपायां सत्तायां । तस्य कारणतेति । मूलसत्वसमवायिता । निरीहपदं व्याकुर्वन्ति । पूर्णमित्यादि । ननु कार्येऽपि न चेष्टा नियता । आकाशादौ व्यभिचारादित्यत आहुः । आकाशेत्यादि । चेष्टा हि व्यापारः । ननु माहाभाष्यकृताऽव्यापारश्चेष्टात्वेनाङ्गीकृतः नत्वन्यैरत आकाशे चेष्टाराहित्यं न कारणासाधारणलक्षणमित्यत आहुः । आवरणेत्यादि आकाशापगमस्यापीति । आवरणकृतावितिशेषः । तथाच दीपचलनेन्धकारचलनवदाकाशेऽपि दृष्टानुरोधान्नैमित्तिकीचेष्टाङ्गीकार्या अन्यथा तादृशप्रतीतेर्निर्विशेषत्वापत्तेः । नच सा भ्रम इति वाच्यम् । किं तावता । भ्रमत्वेऽपि स-

१ व्यापकरूपता ।

विषयत्वस्यावश्यकत्वात् । नच विषयोऽसन्नेव प्रतीयत इति वाच्यम् । श्रौते मते आकाशस्य कार्यत्ववदव्यापकत्वस्यापि सत्वात् । अन्यथा ज्यायानाकाशादिति श्रुतिविरोधापत्तेः । एवं सिद्धे अव्यापकत्वे तत्र क्रियाङ्गीकारोऽपि युक्त एवेति पूर्वोक्तप्रतीतेरभ्रान्तत्वमेव युक्तम् । धियां बाधक विना प्रमात्वस्यैतत्सर्गीकत्वादिति । नन्वेवं सति ब्रह्मण्यपि चेष्टास्तु । मिषत्वस्य तत्रापि श्रौतत्वादित्यत आहुः ब्रह्मणीत्यादि । तथाच विरुद्धधर्माश्रयत्वादव्यवहार्य्यस्य सत्वेऽपि व्यवहार्य्यस्य तस्यासत्वं निरीहत्वं सिद्धमेवेत्यर्थः । वैलक्षण्यस्येति । जगद्वैलक्षण्यस्य । तादृशमिति । नवविशेषणविशिष्टम् । नन्वेकस्मिन्नशिविशेषणे सर्वधर्मसंग्रहसिद्धौ किमितिनवानामुक्तिरित्यत आहुः । नवविधेत्यादि । तस्यैवेति । भ्रमदोषदुष्टस्य ननु भवत्वेवं तथाप्यत्रोक्तानां नवानां स्वरूपे प्रतीत्यभावात्कथंसिद्धिरित्याकाङ्क्षायां व्याप्तिमूलभूत तर्कानुग्रहीतानुमानासिद्धिरित्याशयेनाहुः । एवमित्यादि । अन्यथेति पदमग्रिमेषु वाक्येषु सम्बध्यते । तथाच भगवानव्यक्तः ब्रह्मादिभिस्तदाभिव्यक्त्यर्थं प्रयत्नकरणात् । यन्नैवं तन्नैवं आद्यः पश्चादुत्पन्नत्वेऽपि ब्रह्मादिभिस्तन्नमस्करणात् । ब्रह्म तस्यातत्र सायुज्यप्राप्तेः । यन्नैवं तन्नैवं । ज्योतिस्तत् ज्ञानेन तेषां सार्वज्ञभवनात् । यदेवं तदेवं यन्नैवं तन्नैवम् । गुणातीतः तन्निष्ठानां निर्गुणभवनात् । निर्विकारस्तद्भजनेन सर्वविकाररहित्यात् । सत्तामात्रः सर्वेषु पदार्थेषु तेषां तद्दर्शनात् । निर्विशेषस्तज्ज्ञानेन प्रपञ्चनिवृत्तेः । यन्नैवं तन्नैवं । आनन्दमात्रोनिरीहः । एतत्कृपया तेषां ब्रह्मनिष्ठत्वभवनात् । यन्नैवं तन्नैवम् । अत इति । उक्ताविति । उक्तविधानुमानेभ्यः कालिकव्यभिचारमाशङ्क्य परिहरतित्याशयेनाहुः । नन्वित्यादि । ब्रह्मवाक्यादिति । दिष्ट्याम्ब ते कुक्षिगतः परः पुमानिति वाक्यात् ॥ २४ ॥

नष्टे लोक इत्यत्र तस्यैवेति । अभिमन्तुः । लोकशब्दस्यार्थद्वयमभिप्रेतमित्याशयेनाहुः । लोक इत्यादि । लोक्यतेनेनेतिकरणव्युत्पत्तौ लोकः वाह्यप्रकाशः लोक्यन्त इति लोकाः कर्मव्युत्पत्तौ ते चतुर्दशयद्यपि ब्रह्मणः सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेतीतिश्रुत्याऽध्यात्मिकस्यापि लय उच्यते परं सोऽत्र नाभिप्रेत इति ज्ञापनाय विवृण्वन्ति । सचेत्यादि । स कालो ब्रह्मण इत्यादिना निवृतः । तथाच

निद्रापूर्वभागे इत्यर्थः। तदैवेति। एतेनावान्तरकल्पेषु त्रिलोक्या इव महाकल्पेषु सप्तलोक्या प्रलयः शेषात् ब्रह्माण्डरूपा भूरितिष्ठतीत्यनुसन्धेयमिति ज्ञापितम्। आदौ भूत इति पक्षेऽहङ्कारो नायातीतिमूलस्थे गतेष्विति पदेऽहङ्कारद्वारा गतेष्विति व्याख्यानं ज्ञेयम्। एतत्सूचयतीति। एकस्यैव भगवतः स्थितिः सर्वसंहारकाले वदन्तीति व्याख्याय मानक्रियां सूचयति। पुरुषोत्तमाभिन्न इति पक्षार्थटिप्पणीतो ज्ञेयः। सर्वशब्दवाच्य इति। सर्वैः शब्दैर्वाच्य इत्यर्थः यो यं कालइति ॥ २५ ॥

आधिभौतिकानामाधिभौतिकभूत इति। तदभिध्यानादेवत्विति-न्यायेन तत्र प्रविष्टस्तल्लिङ्गः। स एवेति। प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानविचेष्टा यतः स भगवान् काले इत्युपलक्षित इति तृतीयस्कन्धे कपिलवाक्यात्। काले निविष्टः काललिङ्गः। चेष्टामाहुरिति मूलवाक्यं तमित्यध्याहारेण पूरणीयम्। योऽयमितियच्छब्दस्य तच्छसापेक्षत्वादिति। चेष्टा सत्वमुपपादयन्ति। नहीत्यादि। चेष्टायाः कालत्वे प्राहुरिति यन्मानमुक्तं तदुपपादयन्ति। कालेत्यादि। अत इति यो यज्जनकः स तदात्मक इति व्याप्तेः। प्राकृतकार्यपक्षेपीत्यादि। प्रकृतिर्ह्यस्योपादनमाधारः पुरुषः परः। स ततोऽभिव्यञ्जकः कालो ब्रह्मतत्रितयं त्वहमित्येकादशस्कन्धवाक्यादित्यर्थः। ततोप्याहेति। ततोप्याधिकमाह। आधाररूपधर्मस्येति। आधारभूतस्य धर्मरूपस्य सत्वस्य ॥ २६ ॥

मर्त्य इत्यत्र रूपत्रयमिति। कालरूपमीश्वररूपं विष्णुरूपञ्च। हेतुमिति। प्रपत्तिहेतुभूतं भयम्। अलौकिकमिति। अतीन्द्रियं भयजनकं कालम्। प्रतिकृत्या तादृशपदार्थान्तरप्रतिपत्तौ दृष्टान्तानाहुः। यथेत्यादि। ननु भवत्वेवं तथापि भयं कुत इत आह। कालः स्वभक्ष्यमेव सृजतीति। कालस्य सृष्टिकतृत्वं तृतीयस्कन्धे। सोऽनन्तोऽन्तकरःकालोऽनादिरादिकृदव्ययः। जनं जनेन जनयन्मारयन्मृत्युनान्तक इत्यत्र भारते राजधर्मेषु स्पष्टम्। तत्रगमकमाहुः। अत इत्यादि। तदुपपादयन्ति। तस्येत्यादि। तस्येति। कालात्मकस्य सर्पस्य। तस्य चेति। अतीन्द्रियस्य कालस्य। त्रिविधा इति। योगिनः कर्मठादेवोपासकाश्च। तत्प्रवणा इति। कालाधीनाः ऊदनभूता इति। यस्य ब्रह्म च क्षत्रं च उभे भवतऊदन इति। श्रुत्युक्ताः। सुख-

मिति भक्षणे द्वारं उक्ततृतीयस्कन्धवाक्यात् । सोऽपीति मृत्युरपि । व्यालत्वमुपपादयन्ति । भयेत्यादि । विविधमाऽऽलभनऽर्थोस्मादि-तिक्षीरस्वामिनी निरुक्तत्वाद्योगेन भयहेतुत्वाच्च को व्यालशब्दः तथा-पि मुखहेतुक एव व्यालो दुष्टगजे सर्पे शठेश्वापदसिंहयोरिति कोशे मुखवतामेवोक्तत्वात् । तेषु योगरूढः । अन्यथा नदीप्रवाह एताद्दि-ति निस्त्रिंशादावपि योगस्य तुल्यत्वात्तत्रापि प्रयोगः स्यात् । अत-स्तस्मात् पलायनं मुषकस्यैवेत्यर्थः । तदाहुः । यत्रेत्यादि । इत्युक्त-मिति । तथाच देवत्वादावपि न निर्वर्त्तेत एवेत्यर्थः । कुतो नाध्यग-च्छदित्यत आहुः । शास्त्रेत्यादि । तथाच संवादाभावान्नाध्यग-च्छदित्यर्थः । त्रिविधा इति । योगवेदोपासनाः । अवश्यभक्षकत्वेने-त्यत्र सप्तस्यनन्तरं नेति भिन्नं पदं हि हेतौ योऽसौ तपन्नुदेतीति श्रुतिविचारे तथानिर्णयात् । तर्हि कथं भयनिवृत्तिरित्याकाङ्क्षायामु-त्तरार्द्धं व्याकुर्वन्ति । एवमित्यादि । तन्मध्य इति । त्रिविधयोर्द्वयो-र्मध्ये त्वत्पादाब्जमित्यत्र । समासस्यार्थमाहुः । भगवत्सहितमिति त्वया सहितमिति व्युत्पत्त्या तथार्थः स्फुरति । लोकएवेति सप्तमी त्रितया पेक्षयेति कुण्डलोनी वेददेवापेक्षया ते कालाधीना इदं तदतीतामिति ततोऽतिशयः । स्वपदार्थमाहुः । मृत्पित्यादिं । तर्हि मृत्युस्वतः कुतो न प्रवर्त्तते इत्यत आहुः । मृत्वित्यादि । एवं सर्वं व्याख्याय सिद्धमर्थं निगमयन्ति । शास्त्रंत्वित्यादि । अथ यदिदम-स्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेति श्रुतौ नास्यजरयैतज्जीर्यति न वधेनास्य हन्यत इति तैत्तरीये च यदाह्येवैष एतस्मिन्नदृश्येऽना-त्म्येऽनिरुक्तेऽभयं प्रतिष्ठां विन्दते अथ सोभयं गत इतिशास्त्रं प्रमा-णम् । संवादस्तु स्वस्यालौकिकभावसिद्धिः । युक्तिस्तु सर्वस्य वशी सर्वस्येशानः भीषास्मादित्युपक्रम्य मृत्युर्धावति पञ्चम इत्यादि श्रुत्युक्ता कालनियन्ता च भगवान तयेभ्यो हेतुभ्यः तथेत्यर्थः । ननु लोके व्यभिचारो दृश्यत इत्यत आहुः निष्कपटतयेत्यादि । तथाच यथा प्रल्हादस्य तथान्यस्यापि प्रवृत्तिश्चेत्स्यात्तदा न व्यभिचार इत्यर्थः ॥ २७ ॥

सत्वं घोरादित्यत्र ॥ श्लोकत्रयोक्तानां चतसृणां प्रार्थनानान्ता-त्पर्यं वदन्ति । अत्रेत्यादि । एतेषु श्लोकेषु प्रथमे प्रार्थनाद्वयम् । तत्र प्रार्थनीयेत्यन्तेन प्रथमायास्तात्पर्यमुक्तम् । इदानीमित्यारभ्य

प्रार्थनीयामित्यन्तेन द्वितीयस्याः । एवमित्यारभ्य युक्तवत्यन्तेन तत्रैव पक्षान्तरोपपादनेन युक्तत्वसमर्थनम् । न स्यादिति । अस्माकमिति शेषः । मर्यादेति । पुत्रभावमर्यादा । एवं युक्तैवेत्यन्तेन प्रथमश्लोकतात्पर्यमुक्तं । एतदित्यादिना द्वितीयस्य इदानीं मारणेत्यादिना तृतीयस्य ॥ २८ ॥

जन्मत इत्यग्रिमश्लोकस्याभासं टिप्पण्यां विवृण्वन्ति । इदानीं मारणेत्यादि । इदानीममारयित्वा अन्यत्र गमनं प्रथमः पक्षः । इदानीं मारयित्वा अन्यत्र गमनं मध्यमः पक्षः । इदानीममारयित्वा अनेन रूपेणात्र स्थितिस्तृतीयः । मध्यमपक्षे पक्षद्वयम् । स्वत उपेत्य युद्धेन कंसस्य मारणमित्येकः । स्वतो निवृत्तावपि कंसोयुद्धार्थमायाति चेत्तदा मारणमिति द्वितीयः। एवं पक्षद्वये सत्यपि सः स्वतो नायाति तदा तममारयित्वैवान्यत्र गतिर्भवति तदा तथेत्यर्थः । सुबोधिन्याम् । क्लेशहेतुरिति । अधीरत्वरूपक्लेशहेतुः। तथाच विश्वासेप्यधीरत्वाज्जन्माज्ञानं प्रार्थयत इत्यर्थः । ननु यद्येवं तर्हि भवद्धेतोः समुद्विज इति कुत उच्यत आहुः । भवदित्यादि ॥ २९ ॥ ३० ॥

विश्वपदेतदित्यत्र उपपादयन्ती समर्थयत इति । विरोधाभावमुपपादयन्तीविरोधं समर्थयते । ज्ञानवत्वसम्बोधनामिति । ज्ञानवत्वस्य भगवते सम्यग्बोधनम् ॥ ३१ ॥

भगद्वाक्यतात्पर्योक्तिटिप्पण्याम् । ननु च संख्याया इत्यारभ्य श्रुतिभ्य इत्यन्तेन यत्संख्याया तात्पर्यमुक्तं सङ्गच्छते । संख्यायाः पुरोडासविशेषणतया तत्र श्रावणेन पुरोडाशे अष्टाकपालत्वादिरूपद्धर्मे वा पर्यवसानादिति चेन्न । उदवसानीय विधायक श्रुतौ तथा निर्णयात् । तत्र हि । अप वै सोमेनेजानाद्देवताश्चकामन्त्याग्नेयं पञ्च कपालमुदवसानीयं निर्ववपेग्निः सर्वादेवताः पाङ्क्तो यज्ञो देवताश्चैव यज्ञं चावरुन्धे गायत्रो वा अग्निर्गायत्रिछन्दास्तंछन्दसा व्यर्द्धयति यत्पञ्चकपालं करोत्यष्टाकपालः कार्योष्टाक्षरागायत्रीगायत्रोग्निर्गायत्र छन्दाः स्वेनैवैनं छन्दसा समर्द्धयति पङ्क्तौ याज्यानुवाक्ये भवतः पङ्क्तो यज्ञस्तेनैव यज्ञान्नैतीति श्रावितं । तथाच तत्राष्टकपालपुरोडाशविधाने तस्मिन् पञ्चकपालस्य सत्वेऽपि तदनादृत्य याज्यानुवाक्ययोः पञ्चसंख्याकत्वविधानेन पञ्चसंख्याकयज्ञादनपगमविधानतस्तथानिश्चयात् अतः सत्वाद्य एकसत्तात्पर्यकत्वमपेक्षितस्थले

निश्चयम । अनपेक्षितानां निस्तात्पर्यकत्वं चेति दिक् । सुबोधिन्यां पूर्वस्थितिरित्यादिकारिकाभिः भगवद्वाक्यार्थ उच्यते । तत्र जन्मत्रितय इत्यारभ्य श्लोकत्रयस्य तात्पर्यम् तत्र त्रिगुणमित्यादिकथनस्य किम्प्रयोजनमित्याकाङ्क्षायां तदाहुः । नन्वित्यादितेष्वित्यन्तम् । सुबोधिन्याम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

एवं वा मित्यत्र अहमेवात्मनियोरिति । अत्र सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकाद्व्यधिकरणपदे बहुव्रीहौ गड्वादेः परासमातीति परनिपातः पद्मनाभ इतिवत् ॥ ३६ ॥

तदावामित्यत्र । स्थापयेतीति । वंसुखं पुष्णातीति व्युत्पत्यस्थापयेति । तदपि च बालरूपमिति । अमुनेत्यस्य पदस्य तात्पर्यमिदं ईक्षणस्थले बालकमिति विशेषतया पूर्वमुक्तत्वात् ॥ ३७ ॥ ३८ ॥

अजुष्टेत्यत्र टिप्पण्यां शुषधात्वर्थे किञ्चिदाशङ्क्य परिहरन्ति त्याशयेनाहुः । ननु प्रीतित्यादि । पुनः किञ्चिदाशङ्क्य परिहरन्ति । नन्वजुष्टत्यादि । पुनः किञ्चिदुक्तग्रन्थमाशक्यं परिहरन्ति । ननु मोक्षेत्यादि । सर्वा इति । शक्यः अत एवेति । लीलार्थं मोहस्यावश्यकत्वादेव । अत एव भगवान् मायावाचकपदयोरिति । उक्तमोहादस्य मोहस्य न्यूनत्वादेव ममायेति पदयोः । अत्र प्रासाङ्गिकानुप्रासङ्गिककथनं न प्रकृतोपयोगीत्यरुच्या पक्षान्तरमाहु । वस्तुत इत्यादि । पुनः किञ्चिदाशङ्क्य परिहरन्ति । ननु तदित्यादितिष्ठेदेवेत्यन्तम् । तथाचाप्रतिहते छत्वात्सत्यसंकल्पत्वाच्च तथेति न कोपि शङ्कालेशः ॥ ३९ ॥ ४० ॥

अदृष्ट्वेत्यत्र भ्रमादिति । भगवतोपि कश्चिदस्तीति सम्भावनरूपादज्ञानात् । मर्यादाभङ्गः । तथेति । मां प्रपन्नो जनः कश्चिन्नभूयोनार्हति शोचितुमित्युक्तमर्यादाभङ्गः । ननु स्वसदृशयाञ्चायां स्वदानेऽपि मर्यादाया भङ्गः स्यादेवेत्यत आहुः । सादृश्येत्यादिवचनं बाधित्वेति । अनेनाजुष्टेत्येतट्टिप्पणीस्थमत्रायम्भाव इत्यादिनोक्तं दृढीकृतं ज्ञेयम् । अन्यथा यथा श्रुताबाधेनापि तदाकारकदाने वरसिद्धेबाधनं वृथा स्यादिति । नोत्पादनीया इति । कृत्रिमस्यासत्वात्तत्र ते उत्पादयितुं न शक्या इत्यर्थः । क्रमेणेति । आविवेशेत्यत्रोक्तप्रकारककर्मणेत्यर्थः । ननु तथापि जन्मतादृशस्य न सङ्गच्छते एवेत्याशङ्कायां अभवमिति पदतात्पर्यमाहुः । स एकधेत्यादितथा तस्य

भवन इति । सुतत्वेन भवने । अनेकप्रकारमध्ये तस्यापि संग्रहादिति ॥ ४१ ॥ ४२ ॥

तृतीयेऽस्मिन्नित्यत्र भव इति । वसुदेवदेवकीत्वेन भवः । अत्रापि प्रकटस्य कृष्णो वासुदेव इति नामद्वयं गर्गेण नामकरणान्मुख्यत्वेन विवक्षितामित्यर्थः । ननु प्रथमं एकं द्वितीये द्वयमिति तृतीये त्रयमपेक्षितमित्यत आहुः । तृतीयस्थाने बहूनीति । लोक बहुत्वस्य त्रित्वे पर्यवसानाभावाद्बहूनीत्यर्थः पक्षान्तरमाहुः। देवकीत्यादि । यद्यपि कृष्णेत्येव नाममुख्यं कृषिर्भूवाचक इति श्रुत्या ब्रह्मनामत्वबोधनात् । ब्रह्मवैवर्त्तोक्तगिर्भिश्च नाम्नां मुख्यतरं माम कृष्णाख्यं यत्परं तथेति पुराणान्तराच्च । तथाप्यवतारानन्तर्यमपेक्ष्यैतदुक्तं ज्ञेयम् ॥ ४३ ॥

एतद्वां दर्शितमित्यत्र । ननु भगवत्सांन्निध्यजनितसर्वज्ञतया लौकिकप्रत्यक्षसिद्धेः प्राग्जन्मादिविषयमलौकिकं प्रत्यक्षमेव सत्सतीत्येवं तत्स्मारणस्य किम्प्रयोजनमत आहुः । सान्निध्यादित्यादि । तथाच यथा तस्य तत्फलं तथा वैराग्यमपीति नायं दोषः स्यादिति सर्वज्ञताप्रतिबद्धै तेन बालकरूपेण तत्स्मारणमित्यर्थः। तत्कालमात्रस्यैवेति। स कालो यस्य तत्तत्कालं तन्मात्रस्य तत्सामयिकमात्रस्यैवेति यावत्। अत एव स्तुतिः प्रार्थनाबीजभूतं भयं चेतिद्वयं सान्निध्यरूपप्रदर्शनस्य चक्रमिकं कार्यमत्र सङ्गच्छते । अन्यथा तु प्रार्थनाबीजस्य भयस्याघटमानतैव स्यात् ननु वाक्येन भगवत्वज्ञाने पुनस्तद्दोषतावदस्थ्यमित्यत आहुः । वाक्यादित्यादि । नकाप्यनुपपत्तिरिति । सान्निध्यस्य प्राधान्ये मोहकाभावात् तथा स्यात् भगवाँस्तु यावत्स्वेष्टं मोहं ज्ञानञ्च सम्पादयतीति न दोष इत्यर्थः।स्मारणफलमाहुः एतावतेत्यादि । अनुरूपमदर्शयित्वा केवलवाक्यमेव कुतो नोक्तवानित्यत आहुः । केवलवाक्येत्वित्यादि । केवलवाक्य इति । लौकिकरीतिकःबालरूपेणोक्ते वाक्ये तथाच शास्त्रानुभवयोः सम्वादार्थं प्रदर्शितवानित्यर्थः। उत्तरार्द्धस्याभासोऽयम् । उत्तरार्द्धव्याकुर्वन्ति । अन्यथेत्यादि । उच्यमाने इति । वाक्ये उच्यमाने ॥ ४४ ॥

युवांमामित्यत्र । ननु विषयैक्येऽपि विहितभक्त्योः प्रकारभेदस्य सत्वात्फले कथमैक्यमित्यत आहुः । माहात्म्येत्यादि । तथाच विशेष्यम् । शस्यैक्यातफलैक्यमित्यर्थः । उक्तयुक्तेरप्रयोजकत्वपरिहाराया-

ग्रिमग्रन्थसम्मतिमाहुः । अत एवेत्यादि । अत एवेति । गोपिकादिस्नेहस्य भक्तित्वादेव । अन्यत्र माहात्म्यज्ञानस्य स्नेहाङ्गत्वेन प्रतिपादने वा आवश्यकतेत्याकाङ्क्षायां तदावश्यकत्वे युक्तिं वदन्तीत्याशयेन टिप्पण्यामाहुः ।यदीत्यादि । कथमधिकः स्यादित्याकाङ्क्षायां सुबोधिन्यामाहुः । भक्तानामित्यादि । व्यापाररूपस्य निरोधस्य प्रपञ्चविस्मृतिपूर्वकभगवदासक्तिरूपत्वात्करणरूपया लीलया तावन्मात्रसिद्धावपि भक्तानां प्रपञ्चाभावरूपस्य विरोधस्य तावतैव सिद्धे बोधांशप्रयोजनाभावेन सोऽऽशोवाक्यभेदमापादयन्नधिकं स्यादित्यर्थः । अत्रैव युक्त्यन्तरमाहुः । अत एवेत्यादि । यस्माद्भक्तौ बोधांशस्यावश्यकता अतएव हेतोः पूर्वस्कन्धे उत्पत्तीत्यादिप्रकारेण स्वरूपतो भक्ता भाववन्तो निरूपिताः प्रेमाद्युत्पत्तिप्रकारस्त्वत्रैव वक्ष्यते अन्यथा पूर्वस्कन्धस्यास्यचैकवाक्यता न स्यादतोऽपि सोऽऽशोनाधिकइत्यर्थः । ननु मातृप्रार्थनयाऽन्यत्र गमनस्यावश्यकत्वेऽपि तत्स्थलादिकमनुक्त्वा कथमत्र वाक्यं समापितमित्यकाङ्क्षायां समापनतात्पर्यमाहुः । आर्थिकमित्यादि यदर्थाच्छिद्रतरत्वापि वत् सिध्यति तदत्र कण्ठतो नोच्यत इतिहेतो वाक्यपरिसमाप्तिरित्यर्थः ॥ ४५ ॥

इत्युक्त्वासीदित्यत्र रूपज्ञानेत्यादि । भगवत्वेन तिरोधापिते प्राकृतरूपज्ञानयोर्ये अविहितभक्तिरसानुभवादिरसुरव्यामोहादिश्च तयोरपि प्राकट्यं न स्यात्तद्वाधकस्य भगवत्वस्योद्भूतत्वादित्याशङ्क्य तत्र समाधिमाहेत्यर्थः । तथाकृतवानिति । एतट्टिप्पण्यां बहुधा स्फुटिष्यति । तत्कार्यमिति । स्वरूपकार्यम् । ज्ञानप्राकट्येप्येवमेव ज्ञेयम् । आत्ममायापदे स्वस्य सर्वभवनसामर्थ्यं यदाचार्यैर्व्याख्यातं तत्तात्पर्यं टिप्पण्यां व्युत्पादयन्ति । अत्रात्मपदेनेत्यादि । यद्यात्मतुल्यातदास्थानूमायात्वं कुत उक्तमित्यत आहुः ।संसारेत्यादि । तथाचैतत्कार्ये किञ्चित्तद्धर्मसाम्येन तथोक्तम् । कौंडपायिनामयनेऽग्निहोत्रशब्दवदित्यर्थः। तर्ह्यात्मपदस्य किम्प्रयोजनमित्यतस्तदाहुः । वस्तुत इत्यादि । एतमर्थं न्यायेनोपाद्बलयन्ति । सतीत्यादि । एवं सतीत्यादि । एवं तस्यां भगवत्तादात्म्यसाधनस्य प्रयोजनमाहुः तथाचेत्यादि । अनुषज्यत इति । संयोगपृथक्त्वेनानुषज्यते । तद्व्युत्पादयन्ति । नन्वेतदित्यादि । सूचितमिति । रूपान्तरस्य सूचितम् । दर्शनेऽन्यप्रकारतः सम्यक्तव्युत्पादयन्नेव समर्थयन्ति । अतिशयेनेत्यादि । एते-

र्षां त्रयाणामपि सम्यक्तपक्षाणां समुच्चय एव ननु विकल्पः श्रुतार्थापत्तिसिद्धत्वात् । व्याख्याने वा शब्दस्तु वाक्यालङ्कारे तेन सिद्धमाहुः । एवमित्यारभ्य तथासोदि इत्यन्तम् . नन्वेवं सर्वेषु पदेष्वासीदितिक्रियाया सम्बद्धेषु सत्सु बभूवेतिक्रियान्तरं व्यर्थ्यमसङ्गतत्यादित्याकाङ्क्षायां तदवैयर्थ्यप्रकारकमाहुः। अपरोक्षेत्यादि। सोंऽश इति। अप्राकृतत्वांशः । तथाच प्राकृतो बभूवेति भिन्नं वाक्यमतो न वैयर्थ्यादिदोष इत्यर्थः। यद्यप्यत्र पूर्वसमुच्चायकश्चकारोपेक्ष्यते तथापि परोक्षत्वायैव तदनुक्तिरित्यपि ज्ञेयम् । प्राकृतो बभूवेत्यस्य तद्दर्शनप्रकारकथनत्वमभिप्रेत्य पक्षान्तरमाहुः। अरश्चेत्यादि । तथाभूतैवेति। अप्राकृतैव। ननु तर्हि नालच्छेदादेः। कथमुत्पत्तिरित्यत आहुः तत्तच्चयोकेत्यादि। नन्वनुक्तमिदं कथमङ्गीकर्त्तुं शक्यमित्यत आहुः। लीलाया इत्यादि । प्राकृतत्वप्रतीतेरौचित्ये युक्त्यन्तरमाहुः। अतएवेत्यादि। ननु प्राकृतो बभूवेत्यस्य दर्शनप्रकारकथनत्वाङ्गीकारे भवनक्रियां प्रति प्राकृत इत्यस्य कर्तृत्वमसङ्गतं स्यादित्यतः पक्षान्तरमाहुः। अथवेत्यादि। मुक्तमेवेत्यन्तम् । अस्मिन् पक्षे कल्पनाक्लेशादरुच्या पक्षान्तरमाहुः। यद्वेत्यादि । अस्मिन् पक्षे यथाश्रुतमेव श्लोके वाक्यं ज्ञेयम्। शेषं विवृण्वन्ति । पित्रोरित्यादि। स्नेहातिशयो ज्ञायत इतिस्नेहातिशयरूपं ज्ञायत इत्यर्थः। ममानुस्नेहातिशयात् ज्ञायत इतिपञ्चमीघटितः। पाठः प्रतिभाति। स ज्ञाप्यत इति। स्नेहातिशयो ज्ञाप्यते ॥ ४६ ॥

ततश्चेत्यत्र तस्यचेति वसुदेवस्य च। भगवत्प्रचोदित इत्यादेस्तात्पर्यं तु टिप्पण्यामेव प्रकाशितमिति ततोऽवधेयम्। तर्ह्येवेत्यादि शब्दसूचितमर्थम्। सुबोधिन्यामाहुः । अनेनेत्यादि। यदा बहिर्गन्तुमीयेष तर्ह्यजापायोगमायाजनीत्यादिकथनेन भगवत्प्राकट्यामुहूर्त्तानन्तर्यं लभ्यते। नवम्यां योगनिद्राया जन्माष्टम्यां हरेरतः नवमीसहितोपोष्यारोहिणी बुधसंयुतेति भविष्योत्तरवाक्यान्नवम्यां सा जातेति ज्ञायते। अथ सर्वगुणोपेत इत्यत्र यर्ह्येवाजनजन्मर्क्षमिति निशीथारम्भे रोहिण्यारम्भकथनाद्रोहिणीतु भगवन्मायाजन्मनोस्तुल्याः। अतो निशीथे रोहिण्यारम्भकथनाद्रोहिण्याः कृत्तिकावेधो न दोषाय तेन रामानुजमतीयैर्यत्कृत्तिकाविद्धारोहिणी नाद्रियते तदसङ्गतमुक्तवाक्यविरुद्धत्वात्। सप्तमीवेधस्तु दोषायैवोक्तभविष्योत्तर

वाक्यविरुद्धत्वात् । सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी अविद्धायां सऋक्षायां जातो देवकीनन्दन इतिब्रह्मवैवर्त्तवाक्यविरुद्धत्वाच्च । अष्टमीसप्तमीविद्धा हन्तिपुण्यं पुराकृतं ब्रह्महत्याफलं दद्याद्धरिवैमुख्यकारणादिति गौतमीयतन्त्रवाक्ये दोषोक्तेश्च पुत्रोत्सवादिकञ्च शुद्धनवम्यामेव जातमिति शुद्धाष्टम्यभावे उत्सवाधिकरणकालत्वमादाय स्वकालादुत्तरः कालो गौणः सर्वस्य कर्मण इतिगौणकालत्वं चादाय नवम्युपोष्या नतु तादृशास्थले अर्द्धरात्रवेधादिकमादरणीयमित्यर्थः । इदं यथातथा उत्सवनिर्णयान्तरगतजन्माष्टमीनिर्णयविवरणे सम्यग्प्रपञ्चितमिति ततोऽवधेयम् । ननु गृहाद्बहिर्गमनावसरे मायाजन्मकुत उक्तमित्याकाङ्क्षायामाहुः । अन्तरित्यादि । तत्र हेतुमाहुः । साहीत्यादि । कार्योपायार्थमिति कार्य्यसाधनार्थम् ॥४७॥४८॥

ववर्षेत्यस्याभावे उभयोः सांमुख्येति मायाभगवतोसांमुख्ये ॥४९॥ यमानुजेत्यत्रकालकृतदोषमध्ये गाम्भीर्यं सात्विकं फेनादिरित्यादिपदेन उर्मय मकरादयो जीवाः ॥ स्वाभाविकदोषनिरूपणे समप्रवाहराहित्यं सात्विकम् । सात्विकस्य स्तम्भहेतुत्वात् ॥ ५०॥५१॥५२॥५३ ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीयदुपतितनुजपीताम्बरविरचिते दशमस्कन्धसुबोधिनीटिप्पण्योः प्रकाशे तृतीयाध्यायविवरणम् ।

## अथ चतुर्थोऽध्यायः ।

अथ चतुर्थाध्यायं विवरिषवो जन्मप्रकरणार्थस्य हेतूद्यमस्वीकरणकापट्याऽऽख्याऽर्थचतुष्टयघटितत्वात्तत्र स्वीकरणस्यैव मुख्यत्वात्तत्पूर्वाङ्गयोर्हेतूद्यमयोः पूर्वाध्यायद्वय उक्तत्वात्स्वीकरणोत्तरमत्रोत्तराङ्गभूतं कापट्यं वक्तव्यं तदत्रावसरसङ्गत्या निरूपयति।यद्वा कापट्यं विना रूपान्तरस्वीकरणं न सम्भवतीति प्रकृतघटकोपोद्घातसङ्गत्येदं निरूपयतीत्याशयेनाहुः। मायायाः कार्यमित्यादि । तच्च कपाटावरणादिसर्वधर्मनाशान्तं ज्ञेयम् । नन्वेतन्निरूपणस्य किम्प्रयोजनमित्यादि । यदि कापट्यरूपं मायाकार्यं न भवेत्तदा अनिमित्ततः भगवत्कार्यं न भवेत् । अनिमित्तत इत्यस्यार्थं टिप्पण्यामाहुः। अनिमित्तेत्यादि । तथाच मायाकार्याभावे भक्तदुःखाऽभावात्तत्सुखदानरूपं भगवत्कार्यं न भवेत् अतस्तदर्थं तत्प्रयोजकं मायाकार्यमत्रावश्यं निरूपणीयमिति प्रथमकारिकार्थः। यद्वा ननु मायाकार्यं पूर्वाध्याये निरूपितमित्यधुनेति कथनं न सम्भवतीत्याशङ्क्याह । चतुर्थेति यद्यपि पूर्वाध्याये निरूपितं तथापि तन्न भगवत्प्राकट्यकार्योपयोगि किन्तु नाद्योपयोगि अधुना तु चतुर्थे चतुर्थस्यानिरुद्धस्य प्राकट्यं निरूप्य तन्निमित्तं निरूप्यत इति न दोषः । तद्विशदयन्ति। अन्यथेति। मायाकार्याभावे अनिरुद्धप्राकट्याभावेन भगवत्कार्यं सर्वधर्मरक्षा देवक्यादिबन्धननिवृत्तिश्च न स्यादित्यर्थः। यद्वा पूर्वनिरूपितमपि मायाकार्यं निरूप्यते । तदनिरूपणे संवादाद्यभावे कंसेनापराधाद्यकरणे भक्तदुःखाभावात् पूर्वोक्तं भगवत्कार्यं नाद्यं देवक्यादिबन्धनिवृत्तिर्गोकुलीयलीलात्ततथेत्यर्थः । एवं संक्षेपेणाध्यायार्थं तत्प्रयोजनं चोक्त्वा तदवान्तरार्थानग्रे कारिकात्रयेणाहुः । ज्ञापने इत्यादि । तदेतट्टिप्पण्यां विवृण्वन्ति ज्ञापने इत्यादि । ज्ञापने इति पदं प्रथमाद्विचनातं ज्ञेयम् । मायामोहं विना नेति इदं इति प्रभाष्येत्यस्य सुबोधिन्यां स्फुटिष्यन्ति ॥ १ ॥

ते तु तूर्णमित्यत्र निलायनादिकमिति । बालकस्य निलायनम् । आदिपदेन शब्दान्तरेण प्रतिबन्धश्च ॥ २ ॥ ३ ॥

तमाहेत्यत्र ॥ सात्विक्यपि स्त्री इति। यद्यपि ज्ञानयुक्ता तथापि स्त्रीस्वाभाव्यादाहेत्यर्थः अनालोचितया चिकेति । न विचारितं कन्या या च कस्य कंसस्य स्वरूपं यया तादृशीत्यर्थः। कृपणशब्द-

स्य तादृशीयवाचकत्वे प्रमाणमाहुः । कृपण इत्यादि । कालज्ञानादि-त्यादि । अयं याचनस्य काल इति ज्ञानाद्याचनं कृतवती । तथाच याचनया कन्यादाने भगवान् सर्वात्मक इति भगवतस्तथात्वात् तं दातुं प्रेरयिष्यति तदा तदपराधक्षमामपि करिष्यति तदा कदाप्यनिष्टं न भविष्यतीति ज्ञापनाय सतीपदमित्यर्थः । प्रयोजनान्तरमाहुः । भर्तुरित्यादि । अन्यथेति । अयाचने सति कन्यामारणे ॥४॥५॥

नन्वहमित्यत्र फलमिति । याचनफलम् ॥ ६ ॥

उपगूह्येत्यत्र कृष्णोपनिषदि देवकी ब्रह्मविद्या सा या वेदैरूपगीयते । निगमो वसुदेवोयमिति च श्रावितम् । तत्र ज्ञेयस्य ज्ञानरूपलाभहेतुत्वमर्थस्य च प्रयोगे हेतुत्वं लोकेऽपि स्पष्टम् । एवं सति श्रीयशोदाया मुक्तिरूपत्वेन श्रीदेवकीरूपब्रह्मविद्याविषयतया आधिदैविकत्वमिति सेयंचपरस्परविचारेणैकैव आधिदैविकाध्यात्मिकयोस्तथात्वात् भगवदनुजेनेतिवदत्र शुकैरात्मजाशब्दउक्तइत्यर्थः । शुकस्यैवं कथने प्रयोजनाभाव इत्यरुच्या पक्षान्तरमाहुः । देहेत्यादि ॥ ७ ॥ ८ ॥

सातद्धस्तादित्यत्र । अनुजा त्वं हि न भगवज्जन्मोत्तरकालिकजन्मता प्रयुक्तं अतिप्रसङ्गात् प्रकृते च स मातृकत्वयोरभावाच्छुकेन कथमस्यामनुजात्वमुक्तमित्यत आहुः । यशोदेत्यादि । कृष्णोपनिषदि यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनीति निश्रावितम् । तथा देवकी ब्रह्मविद्या सा या वेदैरूपगीयते निगमो वसुदेवोयमिति च श्रावितम् । तत्र ज्ञेयस्य ज्ञानरूपलाभहेतुत्वमर्थस्य च प्रयोगहेतुत्वं लोकेऽपि स्पष्टम् । एवं सति श्रीयशोदाया मुक्तिरूपत्वेन श्रीदेवकीरूपब्रह्मविद्याविषयतया आधिदैविकत्वमितिसेयं च परस्परविचारेणैकैव आधिदैविकाध्यात्मिकयोस्तथात्वात् भगवज्जन्मनः पश्चान्मायाजाता । एवं तयोरैक्यत्वापश्चाज्जातत्वे सिद्धे यदि भगवानाधिदैविक्याः सुतो यदि वाऽध्यात्मिक्या उभयथापि सा अनुजाता तत्र हेतुः लोकसिद्धेरिति । लोकप्रसिद्धिरैतिह्य तस्मात् श्रुतिप्रत्यक्षमैतिह्यमितिश्रुतौ भगवद्वाक्येचतस्यप्रमाणत्वेनाङ्गीकारादित्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

माशोचतमित्यत्र । मत्कृपयेतिमयि कृपां कृत्वेत्यर्थः ॥ १८ ॥

भुविभौमानीत्यत्र एतच्छ्लोकं व्याख्याय प्रकारान्तरेण व्याकु-

र्वन्ति भुवि भौमानीति। अस्मिन्पक्षे पूर्वार्द्धे दार्ष्टान्तिकवाक्यं भिन्नं कथनीयम्। तथाच यथा भौमानीति पदं भुवित्यनेन सम्बध्यते तथाभूतानीतिपदमध्याहृते आत्मनीति पदेन सम्बध्यते। शेषानि पदान्यावर्त्तन्ते। अस्मिन् पक्षे आत्मपदाध्याहारदोषात् पक्षान्तरमाहुः। भूतानि जातानि चेति यथा भुविभौमानि यथा भव्येवभूतानि अवादीनीत्यर्थः। भूस्त्वधिकरणत्वेनैव वर्त्तत इति तत्र विद्यमानभूतानि आकाशातिरिक्तान्यवादीन्येवेति तान्येवेति जातपदेनोक्तानीतिज्ञातव्यम्। अस्मिन्पक्षे चकारेण दृष्टान्तान्तरस्य समुच्चयान्नपदावृत्तिदोषः। ननु भौमानिमित्यादीनीति यत् द्वितीयं व्याख्यानं तस्य किंप्रयोजनमित्याकांक्षायां टिप्पण्यां तदुक्त्वा व्याकुर्वन्ति। ननु भुवीत्यादि। जातानित्यस्यार्थअवादीनीत्यादि। अस्मिन् पक्षे दार्ष्टान्तिकाकांक्षा भवति तां व्याख्यानेन पूरयन्ति। आत्मेत्यादि। एतेनेति। दार्ष्टान्तिकं व्याख्यानेन प्रकार इति। वैपरीत्यरूपः। एवमपीति। उक्तयोजनायामपि न सार्थकानि भवन्तीति। नायमात्मातथेत्येतावतैव चारितार्थ्यात्तथा। तथात्वमिति। सार्थकत्वं। मूले एवमेवपदसार्थकत्वं विवक्षितमित्यनुगमकं सुबोधिन्यामाहुः। तेष्वित्यादि। तदेतट्टिप्पण्यां व्याकुर्वन्ति। दृष्टान्ते एवेत्यादि। एवं सतीति। न तथैतेष्विति पदानां पूर्वार्द्धेऽन्वये सति। विपक्ष इति। आत्मनोप्युत्पत्त्यादिविकाराङ्गीकारे॥ १९॥

यथा नैवं विद इत्यत्र। एकपदमिति। वेदनं वित्। भाव क्विप्। तत एवमित्यनेन केवलसमासस्ततो न एवं विदन्वेवं विद्विति तत्पुरुषः। ततो यथा वदने वश्वित् यस्येति बहुव्रीहि। तत्र शेषाद्विभाषेति कप्रत्ययप्राप्तः सत्वनित्योवैकल्पिक इत्यर्थ इति श्रीवल्लभः। तन्ममापि सम्मतमिति दिक् ननु भेदस्यानेवं विद्विषयत्वे किं मानमित्याकाङ्क्षायां तस्य तथात्वमुपपादयन्ति भेदस्त्वित्यादि। ननु द्वित्वमेव भेदसाध्यं कुतो न भवतीत्यत आहुः। नहीत्यादि तथाच एकस्मिन् दृष्टे एकएवेति बुद्धिर्भवति न त्वभिन्न इत्यतो द्वित्वसाध्यमेव भेदो न तु भेदसाध्यं द्वित्वमित्यर्थः। नन्वपेक्षाबुद्धेर्भ्रान्तत्वे भेदस्याज्ञानकृतत्वं स्यात्तस्यस्तथात्वमेव कथमित्याकाङ्क्षायामपेक्षाबुद्धेरज्ञानकृतत्वे हेतुमाहुः। अपेक्षाविषयाणामभावादिविषयाणामिति भावप्रधाने निर्देशः। अपेक्षाविषयाह्यात्मानो वाच्यास्ते

च स्वाहं वित्तिवेद्या एव न परस्य विषयाः । अतस्तेषां तथात्वाभावातथैवेत्यर्थः । भेदस्य पारमार्थिकत्वमनुमानेनाशङ्कते । ननु भेद इत्यादि । भेदइति । आत्मनां परस्परं भेदः । एवमनुमानं बाधकतर्केण दूषयन्ति । आत्मविपर्ययो न स्यादिति । बाधकतर्कप्रणयनम् । तच्च आत्मा नाशोत्पत्तिशाली प्रतिशरीरं भिन्न इत्याकारकमन्यथाज्ञानं तादृशविपर्ययस्त्वात्मनः स्तनपानादिक्रियाजनकसंस्कारशालितया नित्यत्वे सर्वशरीरगतचैतन्योपलम्भेन व्यापकत्वे चानुमितेऽपि भेदकृतव्यवहारेण जायते अन्यथा तदुत्पत्तिनाशाभ्यां स्वस्यान्यस्य च हर्षशोकादिकं न स्यात् तथाच भेदो न पारमार्थिकः संसारहेतुत्वात् । यद्यत्संसारहेतुस्तन्न पारमार्थिकं अन्यथा बुद्धिवदिति च । प्रतिपक्षसद्भावान्न पूर्वोक्तानुमानेनात्मभेदसिद्धिर्नचात्मन उत्पादविनाशशालित्वसिद्धिरित्यर्थः । नन्वात्मविपर्ययोऽज्ञानेन न तु भेदेनेत्यत आहुः । अन्यथेति । तथाचैवमङ्गीकारेप्यज्ञाननस्य नाज्ञानत्वेनात्मविषयकान्यथाबुद्धिजनकत्वं, किन्तु भेदजनकत्वेनेति भेदादेवात्मविपर्यय इत्यर्थः । भेदस्यैव कार्यान्तरमाहुः । किञ्चेत्यादि । एकत्वे ज्ञात इति । नित्यत्वेन पूर्वापरदेहयोरेकत्वे ज्ञाते । सर्वव्यवहारेति । श्यामोऽहं गौरोहमित्यादिव्यवहारेत्यर्थः । भेदस्यैव पुनः कार्यान्तरमाहु किञ्चेत्यादि ॥ २० ॥

तस्मादित्यत्र अस्य मत इत्यादि । दैत्यमते सृष्टेः पुष्टिप्रवाहमार्यादाचर्षणीभेदेन चातुर्विध्यं न ॥ २१ ॥

यावदित्यत्र अक्रिय इति कर्मत्वपक्षे क्रियाजन्यफलशालिनीत्यर्थः । कर्तृत्वपक्षे क्रियानुकूलकृत्य नाश्रये इत्यर्थो बोध्यः ॥ २१ ॥

क्षमध्वमित्यत्र स्वस्रोरितिद्विवचनं साधयितुं श्रीधरमतं दूषयति । स्वसृशब्देनेत्यत्र न तृतीया, किन्तु नेति भिन्नं पदं श्रीधरीये । श्यालः कंसः स्वस्रोरिति स्वसृशब्देन द्विवचनानुपपत्त्या मिथुनगुणद्वारामिश्रितलक्षणया स्वसृतत्पत्योरभिधानं लिङ्गसमवायेन प्राणभृत उपदधातीतिवदित्युक्तम् । तदुक्तम् । स्वसृशब्दस्य तत्पताविभिधाया अभावात् । तदभावे चाभिधानमिति प्रयोगस्य च वक्तुमशक्यत्वात् नच स्वस्रोरिति प्रयोगान्यथानुपपत्या लक्षकस्याप्यभिधायकत्वमङ्गीक्रियत इति वाच्यम् । तथासति लक्षणोछेदापत्तेः । नच मास्त्वभिधायकत्वं तथापि प्रयोगसिद्ध्यर्थं वाचकलक्षकयोऽपि

शब्दसारूप्यमङ्गीकृत्य कथं चिदेकशेषः समर्थ्यत इति वाच्यं वाचकलक्षकयोरेकशेषस्य क्वाप्यदर्शनात्। नच प्राणभृत उपदधातीत्यत्र दृश्यतेति वाच्यं तत्र लैङ्गिकसादृश्यस्य सूत्रकाराभिमतत्वात्। अन्यथा तद्वानासामुपधानो मन्त्र इति सूत्रे आसामिति पदं न वदेत्। नचायं न्यायोऽत्र वक्तुं शक्यः। तादृशस्यात्र प्रमाणभावेनाङ्गीकर्त्तुमशक्यत्वात्। तदेतत्सर्वमभिसन्धाय स्वसृशब्देनैवाभिधीयतेत्याचार्यैरुक्तम् ननु भामस्वस्रोरित्येवमुक्तेऽपि भामशब्दमहिम्नैवार्थात्कंसस्य श्यालकत्वप्राप्तावपि यत्स्वस्रोरिति प्रयुक्तं तेन पूर्वोक्त एव व्यासाशय इत्याशङ्कायामाहुः। तत्सम्बन्धादित्यादि। तथाचैतत् ज्ञापयितुमेवं प्रयोग इत्यर्थः। ननु भवत्येवं तथापि सरूपैकशेषस्य वक्तुमशक्यत्वात्स्वसृतत्पत्योर्विरूपैकशेषस्य च पाणिनीयानामननुशिष्टत्वात्कथं प्रयोगासिद्धिरित्यत आहुः। एकशेषेत्यादि। तथा सति स्वसाच तत्पतिश्च स्वसारो तत्र यद्यपि साक्षात्पाणिनीयमेकशेषानुशासनं नास्ति तथापि सूत्रचतुष्टयोक्तया तृतीयया अप्रधानं न शिष्यत। इत्येवं ज्ञाप्यत इति ज्ञापकासिद्धोऽत्र विरूपैकशेष इति सुखेन प्रयोगसिद्धिरित्यर्थः। ननु तृतीयया इदमेव ज्ञाप्यत इत्यत्र किम्मानमत आहुः। अन्यथेत्यादि। यदि हि स्त्रिया सहोक्तौ पुमानेवावशिष्यत इतिविरूपैकशेष नियमः स्यात् तदा द्वन्द्वघटिते स्त्रीपुरुषशब्देऽपि द्वित्वविवक्षायामकशेषे प्राप्ते तत्र सरूपस्य स्त्रीपुरुषशब्दान्तरस्याविवक्षिततत्वात्स्वरूपसूत्राप्राप्तौ पुमान् स्त्रियेति सूत्रेण विरूपैकशेषे पुरुषयोः पुमांसावित्येव प्रयोगः स्यात् स तु न दृश्यते अतस्तत्र तृतीया अप्रधानं न विष्यत इत्येवं ज्ञापयतीति मन्तव्यम्। एवं स्त्रीपुंसौ मातापितरावित्यादिप्रयोगान्यथानुपपातिबलाद्यत्रोभयप्रधान्यं विवक्षितं तत्र न विरूपैकशेषः यत्रत्वप्रधान्यं विवक्षितं तत्रैव स इति प्राप्त्या प्रकृते भर्त्तुरप्राधान्यस्य विवक्षितत्वादत्रापि तद्भर्त्रा सहिता स्वसैवावशिष्यत इति न पाणिनीयविरोधः लक्ष्यैकचक्षुष्कतापक्षस्यैव महाभाष्यकृताङ्गीकारेण वैयाकरणानां प्रयोगशरणत्वात् इति दिक् ॥ २३ ॥ २४ ॥ २५ ॥

एवमेतादित्यत्र अन्यथेति एतस्यैव व्याख्यानं स्वरूप इत्यादि ॥२६॥

शोकर्षेत्यत्र तस्य ज्ञान इति सिद्धान्तशास्त्रस्य ज्ञाने शोकस्यै-

श्वर्यप्रतिपक्षत्वं व्युत्पादयन्ति । सहीत्यादि तथाच स हि ज्ञात्वैव करोतीति तदज्ञानादेव शोकः भगवद्विचारात्प्रकारान्तरेण यदपेक्षितं स्वांशांनां जीवानां तदन्योऽन्यं नाशयेत् । सामर्थ्याभावात् दण्डप्राप्तेश्च किन्तु भगवानेव नाशयतीति ज्ञानाजननादैश्वर्यविरुद्धः शोक इत्यर्थः । हर्षभययोर्वीर्यप्रतिपक्षत्वं व्युत्पादयन्ति । हर्षश्चेत्यादि तथाच हर्षभये वीर्यविरुद्धे । द्वेषस्य यशो विरुद्धत्वं व्युत्पादयन्ति । यदीत्यादि । यशसः ज्ञाने लोभस्य श्रियः प्रतिपक्षत्वमाहुः लोभश्चेत्यादि । न भवेदितिशेषः । तत्र हेतुमाहुः । द्वेषश्चेत्यादि तथेति लोभद्वेषादिकं मोहस्य ज्ञानप्रतिपक्षत्वमाहुः । ज्ञाने इत्यादि । तथाच वध्यश्लोकेत्वात्प्रतिपक्ष इत्यर्थः । श्रुत इति । शोकाद्युत्पत्तिसद्भावात् । अन्यथेति । यदि पश्येयुः । एवञ्च नोपलभ्यते अतो जना न पश्यन्तीत्यर्थः । अग्रिमेनिरूपिताविति प्रसङ्गाविति शेषः ॥ २७ ॥ २८ ॥

तस्यामित्यत्र तस्याः स्वतन्त्रतया कार्यकरणस्य किं प्रयोजनमित्याकाङ्क्षायामाहुः यदीत्यादि ज्ञानस्येति । स्वशत्रूत्पत्तिज्ञानस्य ॥ २९ ॥ ३० ॥

एवं चेदित्यत्र अन्यैरपीति । त्वदीयैरिति शेषः । अन्यथेत्यादि भगिन्यत्रमारणाभावे प्रभूराजा न वदेदाज्ञामिति शेषः अयमर्थः स्वयं चेद्भगिनीपुत्रमारणेन कृतं स्यात्तदा स्वकीया अशेषं मदुक्तिं न मंस्यत इति प्रभुरपि न वदेत् । अधर्मरूपत्वादेव मायायाः स्वयं तथाकरणे तु यथा राजा तथा प्रजेतिन्यायादाज्ञादाने निःशङ्कता स्यादिति तथा ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

तस्य चेत्यत्र अनेनेति दक्षिणायाः भार्यात्वनिरूपणेन तस्येति । यज्ञस्य तथा च विष्णुदेवयो मूलं द्विविधेयं इति भावः पक्षान्तरमाहुः । पञ्चात्मकोवेति वेदात्मको यज्ञात्मको गवात्मको विप्रात्मकस्तपात्मको विष्णुरेव वा देवानां मूलमित्यर्थः । प्रकारान्तरेण द्वयमेवमूलमित्याहुः अनेनेति मूलनिरूपवाक्येनेत्यर्थः तत्किमत्राहुः । ब्राह्मणाश्चेति इयं व्याख्या अग्रिमश्लोकस्वरससिद्धेति बोध्यम् । तस्मात्सर्वात्मनेत्यत्र उभयविधमिति कर्मज्ञानात्मकं वेदार्थं हनधातोरित्यादि तथाच वर्त्तमानसामीप्ये वर्त्तमानवद्वेत्यनुशासनान्मन्त्रकरणसमय एव तत्करणज्ञापनार्थो हन्म इतिप्रयोग इत्यर्थः ॥ ४१ ॥

विप्रा इत्यत्र अन्यान्यप्यङ्गानीति हविः साधनानि व्रीहि यवा-

नानि अत्रपदमुपलक्षकं तथाच यावन्ति हविः साधनानि तावन्ति ज्ञातव्यानि ॥ ४२ ॥

सहीत्यत्र गुहापदार्थमाहुः गुप्त इत्यादि। गुप्ते रक्षिते अलक्ष्ये वा स्थाने गुहां प्रविष्टा इतिश्रुत्वा अन्तःकरणे वा। तथाचान्तःकरण-पक्षे यद्यपि समीपे वर्त्तते तथाप्यन्तकरणस्याणुत्वेन नित्यत्वात्त-मध्यवर्त्तीपरमसूक्ष्मोऽदृश्यतरोनित्यतरश्च कथं प्रतीकार्यः यद्वा-मारणार्थं विचारे क्रियमाणेऽन्तःकरणवृत्तित्वाद्विचारज्ञस्तिरोहि-तः स्यात् यद्वा स्वदेहमारणं विना स्वान्तःकरणवार्त्ति मारणं न भवतीति यदा तं तथाकर्त्तुमुद्यत स्यात् तदा पूर्वं स्वयं मृतः पश्चात्कं मारयेदिति सोऽप्रतीकार्य इत्यर्थः प्रतीकार इति इतोऽन्यः प्रतीकारः ॥ ४३ ॥ ४४ ॥

एवमित्यत्र मन्त्रित्वेन गृहीत इति दुष्टो यदि दुष्टत्वेन गृहीत-स्तदातत्सङ्गस्तथा न बाधकः मन्त्रित्वेन गृहीतस्य तु सर्वथाबाधक इत्यर्थः। तित्रत्वेनेति पाठेऽपि तथैवार्थः एकस्यैवं व्यवस्था बहूनां तथात्वे तु किं वक्तव्यमितिभावः ॥ ४५ ॥

सन्दिश्येत्यत्र। स्वविषय इति विधयेदेशेतेवैरज इत्यत्र अनेने-त्यादि। अनेन श्लोकेन तेषां दुर्मन्त्रिणां स्वरूपतोऽन्तःकरणनाशा-त्। अन्तःकरण हि वैकारिककार्यत्वाज्ज्ञानजनकत्वाच्च स्वरूपः सात्विकं तत्स्वरूपनाशश्च रजोरूपत्वे सत्वरूपस्य तस्य धर्मोज्ञानं तमसा ज्ञानमात्रनाशाद्धर्मतश्च नाश इति तथेतिभावः ॥ ४७ ॥

आयुश्रियमित्यस्याभासे। सर्वनाशार्थमिति। सर्वदैत्यनाशार्थं समाप्ते एवमित्यादि एवं प्रकारेण यन्मायाकार्यं सर्वदुःखात्मकं निरूपितं तद्भगवतोऽनिरुद्धस्य यच्चरित्रं सर्वधर्मरक्षारूपं तत्सिध्यर्थं हेतुत्वेन निरूपितमित्यर्थः ॥ ४८ ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीयदुपतितनुजपी-
ताम्बरविरचिते दशमस्कन्धसुबोधिनीटिप्पण्योः
प्रकाशे चतुर्थाध्यायविवरणम्।



(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २
(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीब्रजनाथभट्टकृता ( वेदान्तः ) ... २
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... २
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १
(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता २
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपारिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १
(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य-

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचित-तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ३

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणीता। रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्ययातथासोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता। ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्यविरचितकुञ्जिका टीका-श्रीमद्बालम्भट्टविरचितकलाटीका-इति टीकाद्वयसंवलिता। ... २

(४७) व्याकरणसिद्धान्तसुधानिधीः। पर्वतीय विश्वेश्वरसूरिविरचितः। ३

(४८) वीरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ४

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलंकृतः। ४

**पत्रादिप्रेषणस्थानम्** } **हरिदासगुप्तः, चौखम्बा बनारस सिटी।**

